र्द्विरुक्तिरुपास्यतया प्राप्यतया च' हृदि स्थिते द्विरुक्तिर्हृदयस्थितिज्ञापनार्थं सौलभ्यानुसन्धानार्थं च' इति श्रुतप्रकाशिका । उपासकस्य भाविफल-सिद्धिनिश्चयस्य द्योतनाय वा तेषां पुनर्वचनम् । फलस्य सिद्धिरनुभूयत एव पुनः पुनः पठनेन । करस्थं फलमिति धृतिः । 'इदमद्धा । नात्र विचिकि-त्साऽस्ति' इत्यनुभवो द्योत्यते पुनः पुनः पठनेन । 'अवाक्यनादर' इति 'वीर्यवान्न च वीर्येण महता स्वेन विस्मितः' इतिवदुपासकस्य विस्मयो द्वि-रभ्यस्तेन आश्चर्यमाश्चर्यमितिवत् ॥

पूर्वाधिकरणानुसंहितकौषीतक्युपनिषदि मोक्षप्राप्तौ 'तं ब्रह्मगन्धः प्रविशति, तं ब्रह्मरसः प्रविशति' इति श्रावितम् । अत्रोपासनदशायामपि तयोरुपास्यगुणत्वं श्राव्यते तत्क्रतुन्यायोपदेशपूर्वकम् ॥

'यथोक्तगुणलक्षण ईश्वरो ध्येयः । न तु तद्गुणविशिष्ट एव । यथा राजपुरुषमानय चित्रगुं वेत्युक्ते न विशेषणस्याप्यानयने व्याप्रियते, तद्वदि-हापि प्राप्तम् । अतस्तन्निवृत्त्यर्थं सर्वकर्मेत्यादिपुनर्वचनम् । तस्मान्मनो-मयत्वादिगुणविशिष्ट एवेश्वरो ध्येयः' इति भवदीयोपनिषद्भाष्ये द्विरभ्यास-स्य प्रयोजनं भाषितम् । तच्च भवदीयनिर्गुणवादभञ्जकम् ॥

क्रतुमयेनोपासकेन विशुद्धभावनाग्राह्यो मनोमयः पुरुष उपास्य इति सांप्रतमिति मनोमयत्वमुपास्यविशेषणत्वेन प्रथमपठितमिव । प्राणशरीर इति प्राणशरीरनेतोच्यते । 'मनोमयः प्राणशरीरनेता' इत्यन्यत्र सहपाठः । क्रतुमयश्चेदुपासको ध्यायमान उपरत एकासने निलीनस्तूष्णीमास्ते कस्तस्य प्राणशरीरनेता भवेदिति शङ्कायामुपास्यः पुरुष एव तां धुरं वहतीति तन्नेतृत्व-मुक्तम् । उपासकस्य प्राणानां निर्वाहस्तेन क्रियते । प्राणशब्देन जीवग्रहणं वा 'प्राणा वै सत्यं तेषामेष सत्यम्' इत्यादाविव । तथा च जीवशरीरकत्व-मुच्यते । तदेवोपासनदशायां फलदशायां चात्र स्वविषयेऽनुभूयते 'एष म आत्मेति' । भारूप इति दिव्यमङ्गलविग्रहविशिष्टत्वेन निचाय्यत्वाय हृदय-

गुहायां सन्निधानमुच्यते । सर्वगन्धत्वसर्वरसत्वे तद्द्वारके । हृदयायतनत्वं पुनः पुनरनुसन्धीयते । मनोमय इति मनोग्राह्यत्वोक्त्या तत्र सन्निधानं प्रथममेवानुसन्धीयते । मध्ये, उपसंहारे च 'एष म आत्माऽन्तर्हृदये' इति तदनुसन्धानं क्रियते । ब्रह्मणो मनसा मनसि निचाय्यत्वमादरेणाभ्यस्यते ।

प्राणशरीर इत्यस्य 'प्राणाः शरीराणि शरीरवन्नियम्यान्यस्येति सर्वात्मना वश्येन्द्रियत्वम् । .... ...भारूपत्वमुपासकानुग्रहार्थपरिगृहीतविग्रहोपाधिकदीप्तिमत्त्वं वा । सर्वमिदमभ्यात्त इति प्रागुक्तसकलगुणाभिव्याप्तिमत्त्वम्' इत्युक्तम् न्यायरक्षामणावस्मद्भाष्यव्याख्यानमनुसृत्य । द्विवचनेन द्विरभ्यस्तगुणमात्रस्य परिसङ्ख्याप्राप्तौ 'सर्वमिदमभ्यात्त इति प्रागुक्तसर्वगुणाभिव्याप्तिः पृथगुच्यते' इति श्रीमद्दीक्षिताः स्वपरिगृहीतास्मद्भाष्योक्तार्थस्य स्वारस्यं प्रदर्शयन्ति ।

'अनुपपत्तेस्तु न शारीरः' इति सूत्रं विवक्षितगुणानां शारीरेऽनुपपद्यमानत्वं वक्ति । तथा चास्य विषयवाक्यस्य स्पष्टब्रह्मलिङ्गत्वं, अस्पष्टजीवलिङ्गत्वं च सूत्रद्वयेन कण्ठोक्तं भवति । लिङ्गाना ब्रह्मण्युपपत्तिः शारीरेऽनुपपत्तिश्च सुस्पष्टत्वेन हेतूक्रियेते सूत्रकृतैव । अनेनास्मत्प्रदर्शितास्पष्टजीवलिङ्गत्वमेव सूत्रकारसम्मतपादोपाधिरिति निश्चीयते । एतत्सूत्रविषये भामत्याद्युक्तार्थस्य, भवदुक्तार्थस्य च न केवलं सूत्राक्षरानारूढत्वम् ; किं तु भवद्भाष्यानारूढत्वमपि । 'सत्यसङ्कल्प इत्यादिगुणा न शारीरे आञ्जस्येनोपपद्यन्ते' इति भाष्यस्थस्याञ्जस्येनेतिपदस्य भवदुक्तार्थो न सङ्गतः । पूर्वपक्षिणा सर्वेषां गुणानां कथञ्चित्क्लेशेनामुख्यत्वेनोपपत्तिः प्रदर्शिता शारीरे । तद्व्याख्याया अनाञ्जस्यमुच्यते भाष्यकृता । यथा सद्विद्यायां साङ्ख्योक्तमीक्षणस्य गौणत्वमनाञ्जसमित्युच्यते' 'पौर्वापर्यपरामर्शाद्याम्नायो अञ्जसा वदेत् । जगद्बीजं तदेवेष्ट चेतने च स आञ्जसः' इति भामत्याम् ।

'सूत्रकारस्याभेदवादित्व एवेदं सूत्रं सार्थकमन्यथा निरर्थकमेवेति सूचयितुं 'सूत्रकार आह' इति भामती इति भवदुक्तिरधरोत्तरा । यत्र शारीरब्रह्मणोरभेदनिरास सूत्राक्षरेभ्यः सुस्पष्टमवगम्यते, तत्स्पष्टतास्पष्टमभ्युपगम्यते च भवद्भाष्यकारै, तत्रैव भेदनिरासः स्पष्ट इति भवन्तो वर्णयन्तीति ध्रुवमत्र महद्वैपरीत्यं भवताम् । इत. पूर्वं न कुत्रापि शारीरस्यारोपितत्वं सूत्रकारेणोक्तम् । नापि वक्ष्यते उत्तरत्र । अत्र कथं रज्जो., सर्पस्य वा वर्णनस्यावकाश· । अत्र दुष्परिहराणि श्रुतप्रकाशिकोक्तदूषणानि न कथञ्चिदपि समाहितानि भवता ॥

'मनोमयत्वादिधर्मैः सत्यसङ्कल्पत्वादिभिश्च पदैर्वस्तुमात्रं लक्ष्यत इति चेत्—तर्हि विवक्षितगुणोपपत्तेश्चेति पूर्वसूत्र विरुद्ध्यते । उभयविधगुणानामविवक्षितत्वं सूत्रकाराभिमतं चेत्—अनुपपत्तेस्तु न शारीर इतिवदनुपपत्तेस्तु नेश्वर इति च सूत्रं वक्तव्यम् । वस्तुमात्रविवक्षायां जीवधर्माणामिवेश्वरधर्माणामप्यनुपपत्त्यविशेषात् । अत ईश्वरधर्मेषु तात्पर्यमवगम्यते' इत्यादिबहुदूषणमुक्तं श्रुतप्रकाशिकायाम् ॥

मनोमयत्वादय सर्वमिदमभ्यात्त इत्यन्ता गुणा ब्रह्मगुणा एव जीवेनोपासनया साध्या इति विवक्षितसूत्रे न्यायरक्षामणिः । मनोमयत्वप्राणशरीरत्वयोर्ब्रह्मगुणत्वात् 'यथा मनोमय वादयः शारीरगुणा उपपद्यन्ते ब्रह्मणि, तथा सत्यसङ्कल्पत्वादयो ब्रह्मगुणाः समारोप्ये जोवेऽप्युपपत्स्यन्ते' इति भामत्युत्थापितशङ्काया अनुत्थितिरेव ॥

अनन्तरसूत्रत्रिकेण जीवब्रह्मभेदो दृढीक्रियत इति दुरपह्नवम् ; संप्रतिपन्नं च भवद्भाष्ये । अन्तिमसूत्रे भेदपर्यायो विशेषशब्दः पठ्यते । 'वैशेष्यात्' इत्यतिशयो द्योत्यते ऽ्यत्रेति भवद्भाष्यम् ॥

भामतीकारिकादिकमुपन्यस्य "तदिदमसहमानश्चोदयति सुदर्शनः 'यथा सर्पव्यावृत्तरज्जुत्वादिप्रतीतौ भीषणत्वादिना रज्जोर्विशेषणं नोपपद्यत,

एवं जीवव्यावृत्तसत्यसङ्कल्पत्वादिप्रतीतावध्यस्तजीवधर्मेण मनोमयत्वादिना परस्यापि विशेषणं नोपपद्यते । नित्यस्य जीवस्य कथमारोपितत्वम् ?" इति भवदुक्तोऽनुवाद एकदेशमात्रानुवादः । अनुदितयुक्तेरपि न कोऽपि उत्तरोक्तः । 'अधिष्ठानं तु सर्वास्पदं स्यान्नत्वारोपेऽधिष्ठानधर्मास्पद-मित्यप्यजानान' इत्येतावन्मात्रमुक्तं भवता । शपथमात्रमेतत् । अधि-ष्ठानारोप्यभाव एव न सङ्गच्छते, जीवस्य नित्यत्वाभ्युपगमादित्याक्षेपः । असिद्धमारोपितत्वं सिद्धवत्क्रियते भवद्भिः । मनोमयत्वादर्जीवगुणत्वेऽशु-द्धाना तेषामत्रैवोपन्यस्तेन तत्क्रतुन्यायेन प्राप्तावप्यनुवृत्तिप्रसङ्गात् , तेषां स्पृहणीयत्वं ब्रह्मगुणत्वं च इति श्रीमद्दीक्षिताः अनुपपत्तिसूत्रस्य भामतीव्या-ख्यानमनुपपन्नमिति मत्वा तत्सूत्रस्यान्यथैव व्याख्यां चक्रुर्न्यायरक्षामणौ । 'यद्यपि मनोमयत्वादयो भाव्यभिप्रायेण जीवेऽपि कथञ्चिदुपपद्यन्ते, तथा-ऽप्यवाकीत्यादिनोक्ता अनिन्द्रियत्वादयः कथमपि नोपपद्यन्ते । ते हि नोपासनार्थमुपात्ताः । किं तु घ्राणरसनाभोग्यगन्धरसवत्त्वोक्त्या प्रसक्ता-मिन्द्रियवत्त्वशङ्कां ... .... निवर्तयितुमुक्ताः । अतस्ते नोपासकप्राप्यगु-णतया व्याख्येया इति ते जीवे नोपपद्यन्त एव । किं च मनोमयत्वाद-यो ब्रह्मगुणा एव ग्रहीतुमुचिताः न तूपासकगुणा इति वैषम्यं सूत्रे तु-शब्देन द्योत्यते । ते हि ब्रह्मणि स्वतःसिद्धाः । जीवे तूपासनालक्षण-हेतुसाध्याः । सिद्धसाध्यधर्मग्रहणसन्देहे सिद्धधर्मा एव ग्राह्याः ; न तु साध्यधर्माः' इति तत्रोक्तम् , 'यथा सत्यसङ्कल्पत्वादयो ब्रह्मण्युपपद्यन्ते, एवं शारीरेऽप्युपपत्स्यन्ते , शारीरस्य ब्रह्मणोऽभेदात् । शारीरगुणा इव मनोमयत्वादयो ब्रह्मणीत्यत आह सूत्रकारः 'अनुपपत्तेस्तु' इति' इति भाम-त्युक्तां सूत्रनिरस्यां शङ्कामपुनरङ्कुरमुन्मूलयति । मनोमयत्वादीनां जीवधर्म-त्वाभावात् तद्दृष्टान्तप्रदर्शनस्यानुपपत्तिरेव ॥

विवक्षितशब्दस्य प्रयोजनमुच्यते भवद्भिः 'स्वतन्त्रसगुणोपासन-

वाक्यविषयोऽयं पादः , न तु पूर्व इवानुपपन्नगुणकप्रतीकोपासनविषयः न वा पर इवाविवक्षितगुणविषयकश्चेति संसूचकम्’ इति । प्रथमपादस्य प्रतीकोपासनप्रायत्वकथनं व्याहतम् । ईक्षत्यानन्दमयान्तर्ज्योतिरिन्द्रप्राणाधिकरणानां भवन्मतरीत्याऽपि प्रतीकविषयत्वाभावात् । एतत्पादीयान्तृगुहादृश्यत्वाधिकरणवाक्याना निर्गुणपरत्वाच्च । अनन्तरपादे गुणेषु विवक्षा भूय प्रदर्श्यते गुणविशेषस्य ब्रह्मलिङ्गत्वेन हेतूकरणेन । अविवक्षितस्य कथं हेतुत्वेनोपन्याससम्भवः ॥

अत्र सूत्रोक्ता ब्रह्मकारणत्वप्रसिद्धिः पूर्वपक्षिणोऽप्यस्ति । पूर्वपादेन तत्प्रसिद्धिं ग्राहिताः परवादिनः । अत उच्यते पादोपक्रम एव प्रसिद्धोपदेशादिति । एतेनास्मिन् पादेऽन्ययोगव्यवच्छेदः क्रियत इति स्पष्टीक्रियते शास्त्रकृतैव । ‘साधारणशब्दविशेषात्’ इति पादान्ते च ब्रह्मण्यन्यत्र च प्रसिद्धि सूच्यते ॥

अत्र शाण्डिल्यविद्यायां ‘एतमितः प्रेत्य’ इत्यस्माच्छरीरात् समुत्थानरूपमुत्क्रमणमुच्यते । अनन्तराधिकरणविषयकठवल्ल्यामुत्क्रान्तस्य ब्रह्मनाड्या निर्गमनमुच्यते ‘तयोर्ध्वमायन्’ इति । अनन्तराधिकरणविषयोपकोसलवाक्येऽर्चिरादिपथेन गमनं चोच्यते । अर्चिरादिगतिरेतासां विद्यानां समाना । न सगुणनिर्गुणविद्याभेदः संमतः सूत्रकारस्य । सर्वविद्यानिष्ठानामवश्यापेक्षिते उत्क्रान्तिगती अत्र क्रमेण प्रदर्श्येते । तत्क्रतुन्यायश्च सर्वोपकाराय प्रदर्श्यते । भवन्मतरीत्याऽत्तृगुहादृश्यत्वाधिकरणवाक्यानि निर्गुणविषयाणि । तानि च सगुणवाक्यविषयत्वेन संप्रतिपन्नाधिकरणमध्यपतितानि तत्सदृष्टानि ।

चिदचिद्विलक्षणत्वेन कारणब्रह्मस्वरूपसत्तां प्रथमपादेन प्रसाध्य, अस्मिन् पादे सूत्रकृत्प्रधानप्रतितन्त्रभूतं जगद्ब्रह्मणोः शरीरशरीरिभावरूपसम्बन्धव्युत्पिपादयिषया तद्बोधकविषयवाक्यान्युपादत्ते । स्वशास्त्रस्य शा-

रीरकसंज्ञां चान्वर्थयति । 'विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाक्यवर्गः' इत्येतत्पादाधिकरणानामनुगताकारविशेषः सङ्ग्रहेऽधिकरणसारावल्याम् । सर्वं ब्रह्मविधेयम्; ब्रह्मात्मकमिति सूच्यते तज्जलानिति । ब्रह्मणः सर्वसामानाधिकरण्यश्रवणेन शरीरशरीरिभावः सूच्यते । 'एष म आत्मा' इति त्रिरभ्यासेन ब्रह्मणो जीवं प्रत्यात्मत्वम्, जीवस्य ब्रह्मणः शरीरत्वं चोच्यते ॥

अत्त्रधिकरणम् ॥

सम्भोगप्राप्तिसूत्रेण जीवस्यैव भोक्तृत्वम्; नेश्वरस्येत्युक्तम् । कठवल्ल्याम् 'यस्य ओदनः' इति श्रूयमाणः अत्ता भोक्ता जीवः स्यान्न पर इति सङ्गतिरुभयसमता । 'अत्ता खल्वोदनादेर्भवभुगिति कठश्रुत्यधीतोऽप्यसौ स्यात्' इत्यधिकरणसारावली । तज्जलानित्युक्ततज्जत्वतल्लत्वतदनत्वेषु तल्लत्वमत्रोपपाद्यते । शाण्डिल्यविद्यायामिव कठवल्ल्यामपि 'अणोरणीयान्महतो महीयान्' इति प्रतिपाद्यपरमात्मनः अणिष्ठत्वे सति महिष्ठत्वम्, 'आत्माऽस्य जन्तोर्निहितं गुहायाम्' इति हृदयगुहानिहितत्वम्, 'एको वशी सर्वभूतान्तरात्मा' इति सर्वभूतान्तरात्मत्वम्, 'तमेव भान्तमनुभाति सर्वम्' इति भारूपत्वमित्यादिकं श्रूयते । एवमपि कठवल्ल्याः सन्निकर्षः शास्त्रकृद्बुद्धौ ॥

अत्राग्निजीवपरमात्मविषयकत्वेन त्रिकोटिकः संशयः प्रदर्शितो भवद्भाष्ये । ओदनवाक्ये नाग्नेः शब्दतो वा, असाधारणलिङ्गतो वा प्रकरणतो वा प्राप्तिरस्ति; तद्विषयः पूर्वपक्षो न सूत्रकाराभिप्रेतो भवेदिति श्रुतप्रकाशिकोक्तं भवन्त आक्षिपन्ति । अग्निपूर्वपक्षे भवद्भाष्यकाराणां नोत्कटं तात्पर्यमिति भाष्यतद्व्याख्यानेभ्य एवावगम्यते । तस्मादत्ता जीव इति पूर्वपक्षं निगमय्योक्तं न्यायरक्षामणौ 'अग्निपूर्वपक्षस्तु भाष्ये सम्भवमात्रेणोपन्यस्तः' इति । श्रुतप्रकाशिकोक्तयुक्तीनामसमाधेयत्वनिश्चयात्तथोक्तं

भवेत् । 'त्रयाणां चाग्निजीवपरमात्मनामास्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः' इत्यग्नेरपि प्रसक्तौ प्रश्नोपन्यासरूपहेतुर्भाषितो भवद्भाष्ये । अग्निविषयः प्रश्नस्तृतीयवरवरणात्प्रागेव सामग्र्येण प्रत्युक्तः । 'एष तेऽग्निर्नाचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व' इति तत्प्रश्नोत्तरं समाप्तम् । अनन्तरप्रश्नो नाग्निविषयः । अतस्तदुपदेशस्य नावकाशगन्धोऽपि । पृष्टाद्भिन्नस्याख्याने 'आम्रान् पृष्टः कोविदारानाचष्टे' इति न्याय आपद्येत । 'अग्निप्रकरणमतीतमित्यरुचेराह' इति अग्निशङ्कापरित्याग उक्तो रत्नप्रभायाम् । 'अग्नेः संहर्तृत्वेऽपि भोक्तृत्वाभावान्नाग्न्युपास्तिरिहेत्यपरितोषादाह' इत्यानन्दगिरिः ।

'एवं स्थितेऽत्र जीवः परो वेति शिरोद्वयमेव ; न तत्त्रयम् ; चित्याग्नेरेव पूर्वं प्रस्तुतत्वेन साक्षादग्न्यप्रस्तावाद्विच्छिन्नत्वाच्च तत्प्रकरणस्य, अध्यात्मप्रकरणे विद्याङ्गकर्मोपयोगित्वमन्तरेणाग्न्यनुपयोगेन तद्वैभवप्रतिपादनायोगाच्चेति वदन्ति परे' इति श्रुतप्रकाशिकाक्षेपमनूद्य भवद्भिरुक्तम् "उपकोसलविद्यायामग्निभिरेवेयमस्मद्विद्येति स्वोपासनोपदेशात्, अप्रकृतमपि जीवमिव पूर्वाधिकरणेऽत्राग्निमादाय पूर्वपक्षकरणेऽपि प्रकरणेन प्रतिक्षेपसंभवात्, 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इति महीकृत्य विराड्रूपस्याग्नेरुपासनस्य प्रस्तुतत्वात्प्रकरणविच्छेदस्य जीवेन समानत्वात् , अन्यथा प्रकरणाच्चेत्यस्यायोगादुक्तयुक्तेश्च नाग्निपरित्यागो न्याय्य एषाम् ; किं तु भूतग्रहोऽपि न्याय्य इति" इति । उपकोसलविद्यायाम् 'इयमस्मद्विद्या आत्मविद्या च' इत्यग्निविद्या नामत एव ब्रह्मविद्याङ्गत्वेनोपन्यस्ता । न सा तत्र स्वातन्त्र्येणोपन्यस्ता । चकारेण तत्राङ्गाङ्गिभावरूपसमुच्चयो विवक्षितः । अग्निविद्या च तत्राग्न्युपासनं मनश्चितादिवत् । नात्राग्नेस्तद्विद्याया वा कीर्तनमस्ति । उपकोसलविद्याविषयेऽन्तराधिकरणेऽग्निविषयत्वेन विकल्पशिरःप्रदर्शनं न कृतं भवद्भाष्ये । अतस्तद्वाक्योदाहरणमनुदाहरणमेव भवेत् ।

'विच्छिन्नत्वाच्च तत्प्रकरणस्य' इत्याक्षेपस्य भावो न बुद्धो भवद्भिः । प्रश्न-प्रतिवचनेनैवात्र प्रकृतत्वमवगन्तुं शक्यम् । तदेव शङ्काबीजत्वेन वर्णित-मुदाहृतभवद्भाष्यवाक्ये । अग्निविषयपूर्वप्रश्नस्य निःशेषमुत्तारितत्वात्, तत्प्र-करणस्य समाप्तत्वात्; तद्विषयबुभुत्सोपदिदिक्षाप्रयुक्ताकाङ्क्षाया निःशेष शान्तत्वात्, प्रश्नान्तरस्य कृतत्वात्; तदुत्तरस्य च प्रक्रान्तत्वादग्निप्रकरण विच्छिन्नमेव। इत्थं श्रुतप्रकाशिकाकथितस्याग्निप्रकरणविच्छेदरूपस्याक्षेपहे-तोरसमाधेयतैव । 'जीवमिव पूर्वाधिकरणेऽत्राग्निमादाय पूर्वपक्षकरणेऽपि प्रकरणेन प्रतिक्षेपसम्भवात्' इति भवदुक्तिरसमीचीना । ज्योतिराधिकरणविष-यवाक्यादारभ्य तत्र ब्रह्मणः प्रकृतत्वेऽपि, जीवस्याप्रकृतत्वेऽपि शाण्डिल्य-विद्यायां मनोमयत्वप्राणशरीरत्वाणुत्वव्यपदेशादिभिर्लिङ्गैर्जीवपूर्वपक्षः प्राप्नो-ति । तत्र न प्रश्नप्रतिवचनक्रमेण प्रकृतत्वम् । अत्राग्निलिङ्गानि न सन्ति । अग्निप्रश्नप्रतिवचनसमाप्त्या प्रश्नान्तरतत्प्रतिवचनप्रक्रान्त्या चा-ग्निप्रकरणस्य विच्छेदोऽत्र स्पष्टः । अतः पूर्वाधिकरणदृष्टान्तोपन्यासोऽ-त्यन्तविषमः । अग्निपूर्वपक्षिणाऽग्नेः प्राधान्येन प्रतिपाद्यं खलूपपादनीयम् । ब्रह्मणि समन्वय खल्वाक्षेप्तव्यः ॥

'ब्रह्मजज्ञं देवमीड्यं विदित्वेति महीकृत्य विराड्रूपस्याग्नेरुपासनस्य प्रस्तुतत्वात्' इति भवदुक्तिरसिद्धेनासिद्धस्य सिषाधयिषामात्रम् । ब्रह्मजः, ज्ञः इत्यात्मोच्यते; न विराड्रूपोऽग्निः । नाचिकेताग्निविद्याऽन्तर्गतब्रह्मज्ञाना ब्रह्मवेदनद्वारा मोक्षप्रापिकेति भूयोऽत्र श्रूयते । 'निचाय्येमां शान्तिमत्य-न्तमेति' 'स्वर्गलोका अमृतत्वं भजन्ते' 'अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेनं निहितं गुहायाम्' 'स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्व-र्गलोके' इत्यत्यन्तशान्तिप्राप्तिः, अमृतत्वभजनम्; अनन्तलोकाप्तिः; मृत्यु-पाशप्रणोदनम्; शोकातिगत्वमिति नाचिकेताग्निविद्याफलं मोक्षरूपत्वेन कीर्त्यते । ऋतं पिबन्ताविति मन्त्रे 'छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो

ये च त्रिणाचिकेता' इत्यत्रैवोत्तरत्र त्रिर्णाचिकेताग्निश्चितो यैस्तेषां त्रि-णाचिकेतानां ब्रह्मवित्त्वं स्पष्टमुक्तम् । 'न केवलकर्मिणो वदन्ति' इति तत्र भगवत्पादभाष्यम् । नाचिकेताग्निविद्यानिष्ठानां ब्रह्मवित्त्वेनानुवादस्तद्विष-यपुरोवादमपेक्षते । स च पुरोवादो ब्रह्मजज्ञमन्त्रे एकस्मिन्नेव दृश्यते । तन्मन्त्रस्य मन्त्राक्षरप्रतीताध्यात्मज्ञानपरत्वं विहाय विराडग्निपरत्वेन तद्व्या-ख्याने, त्रिणाचिकेताना ब्रह्मवित्त्वेनानुवादो न सङ्गच्छेत । ब्रह्मजज्ञमन्त्रे-ऽग्निवाचकशब्द एव न विद्यते । अमृतमोक्षफलोपपत्तेरध्यात्मज्ञानवत्त्वोप-पपादनाकांक्षाऽस्ति । अतस्तन्मन्त्रे न विराडग्निप्रस्तावः । विराडग्न्यु-पासनं प्रतीकोपासनमेव भवेत् । प्रतीकक्रतुरब्रह्मक्रतुर्न ब्रह्मविदित्यनूद्येत ।

'प्रकरणविच्छेदस्य जीवेन समानत्वात्' इति भवदुक्तिरसङ्गता । जीवपरमात्मनोरुभयोरपि तृतीयवरेण पृष्टत्वं भवदीयैरभ्युपगतम् । 'त्रयाणा-मेव चैवमुपन्यासः प्रश्नश्च' इति सूत्रे तथैव भाषितं भगवत्पादैः । वयं तत्रोपायोपेयोपेतॄत्रयस्य पृष्टत्वं वदामः । अग्निप्रश्नस्य पूर्वमेव कार्त्स्न्ये-नोत्तारितत्वात् , चरमप्रश्नेन जीवपरमात्मनोरुभयोरपि पृष्टत्वाज्जीवदृष्टान्तो-पादानं विषममेव । अत्राग्निप्रस्तावशङ्कैव न सम्भावनार्हा । अग्निशङ्का-प्रापकत्वेन 'अग्निर्वा अन्नादः' इति भवद्भाष्योदाहृता श्रुतिर्नक्षत्रेष्टिप्रक-रणे दृश्यते । तत्र हविरत्तृत्वमेवोक्तमग्नेः । कथं तेन तस्य मृत्यूपसि-क्तब्रह्मक्षत्रौदनात्तृत्वशङ्काप्राप्तिः । भोक्तृत्वलिङ्गेन जीवस्य प्राप्तिरुक्ता पूर्वपक्षिणाऽत्र भाष्यद्वयेऽपि । ब्रह्मक्षत्रयोः कर्मकरत्वेन भोग्यत्व शङ्कितम् ॥

'तेषां भूतग्रहोऽपि न्याय्यः' इति भवदुक्तिर्न सुबोधा । यदि भूताग्निपूर्वपक्षोऽप्यभिप्रैष्यत 'अत एव न देवताभूतं च' इत्यादिवत्सूत्रेण स निरासिष्यत । यदि परिहासोक्तिरभिप्रेयते, वृथा परिहसितुरेव तत्प्रसङ्गः ।

'क इत्था वेद यत्र सः' इति श्रुतिखण्डस्यावृत्त्या ओदनमन्त्रस्य नि-र्गुणपरत्वमप्यस्तीत्युक्तमिदंप्रथमतया कल्पतरौ । उपनिषद्भाष्ये, तट्टीक-

योर्वा, सूत्रभाष्ये वा, भामत्यां वा न तथोक्तम्। अस्याधिकरणस्य सगुणपरत्वमेव निष्कृष्टतयोक्तं परिमले तृतीयपादारम्भवाक्ये। नैतेषु चतुर्षु सूत्रेषु, कठश्रुतौ वा निर्गुणप्रतिपादनलेशोऽपि दृश्यते। 'आत्मानौ' इति द्वित्वसंख्यया ब्रह्मणः सद्वितीयत्वं स्पष्टं सूत्र्यते। 'प्रकरणाच्च' 'विशेषणाच्च' इति प्राप्यत्वप्राप्तृत्वादिना जीवपरमात्मनोर्भेद एव स्पष्टं हेतूक्रियते। तथैव तत्सूत्रयोर्व्याख्यानं भवदीयभाष्ये। कठश्रुतावपि नित्यो नित्यानां चेतनश्चेतनानाम्' इति चेतनबहुत्वम्; जीवपरमात्मनोर्भेद, ईश्वरस्य बहुजीवकामविधातृत्वगुणादिकं च स्पष्टं श्राव्यते। 'ब्रह्मप्राप्तो विजरो विमृत्यु' इत्युपनिषदन्ते विद्याफलत्वेन श्रुता प्राप्तिर्निर्गुणविद्याप्रतीतिविरोधिनी। 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रूयमाणोत्क्रान्तिर्निर्गुणपरतां निरुणद्धि। धातुः प्रसादान्महिमानमीशम्, इतीश्वरानुग्रहेण मोक्षप्राप्तिः श्रूयते। 'हार्दानुगृहीत शताधिकया' इति सूत्रमप्यत्र स्मर्तव्यम्। अतः कल्पतरुव्याख्यानुरोधेन भवतामत्र निर्गुणतात्पर्यगवेषणप्रत्यशा निर्मूलैव। न भवतः, कल्पतरुकृतो वा; श्रुतिसूत्रभाष्याक्षराणामनुग्रहभाक्त्वम्॥

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति कठवल्लीमन्त्रस्य भवदीयोपनिषद्भाष्यवर्णितोऽर्थस्तट्टीकाकर्तृभ्यामपि न रोचते। 'परमपुरुषेण वृत्वानुगृहीतस्यैव तत्साक्षात्कारसंभवः' इत्यर्थ एव वर्णितष्टीकाकर्तृभ्यामानन्दगिरिगोपालाभ्यां भाष्योक्तमर्थमस्वरसमिति परित्यज्य॥

'क इत्था वेद यत्र सः' इति श्रुतिखण्डस्य दुर्विज्ञेयत्वपरत्वमात्रमुक्तं ताभ्यां यथास्माभिः। 'यथोक्तसाधनरहितः सन् क इत्था इत्थमेवं यथोक्तसाधनवानिवेत्यर्थः। वेद विजानाति यत्र स आत्मेति' इत्युपनिषद्भाष्यम्। 'यत्र स्वे महिम्नि स विश्वोपसंहर्ता तथाभूतं तं को वेद इत्यर्थ' इत्यपुरेव स्वमहिमप्रतिष्ठितत्वरूपानान्याधारत्वमुक्तम्। नात्यन्तनिर्गुणे प्रतिष्ठितत्वम्। 'क इत्था वेद यत्र सः' इति च दुर्विज्ञानत्वं परमात्मलिङ्गम्'

इति भाषितं 'प्रकरणाच्च' इति सूत्रस्य भाष्ये भगवत्पादैः । अत्तुरेव तल्लिङ्गम् । इतरथा सौत्रहेतोः सौत्रपक्षेऽत्तर्यनन्वयः प्रसजेत् । अत्तृविषय एव यस्येत्यादिश्रुतिखण्डः । 'क इत्था वेद यत्र सः' इति लिङ्गस्यात्तरि समन्वयः प्रदर्श्यते सूत्रकृता चशब्देनेति न्यायरक्षमाणिप्रदर्शनम् । अत्र निर्गुणसमन्वयप्रदर्शनपरताप्रत्याशा मोघैव । 'जीवस्य सर्वलोकप्रसिद्धस्य न दुर्ज्ञानता' इति भामती ॥

अत्र जीवलिङ्गस्यास्पष्टत्वमेव । ब्रह्म च क्षत्त्र चोभे ओदनशब्दात्प्राग्वाद्यवस्तुत्वेन श्रूयेते । यद्यप्युपसेचन श्रूयते, मृत्योः खलु तद्भावो रूप्यते । मृत्युरत्रोपदेष्टा ब्रह्मविदग्रेसर आधिकारिकपुरुषो यावदधिकारमात्रं संसारे मुक्तवदवस्थितः । स्वस्य परमात्मशेषत्वरूपतत्त्वस्य साक्षात्कृतत्वात्स्वस्यैवोपसेचनत्वम्, परमात्मनो भयाद्धावन च स्वय वक्ति । 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' इति नात्मश्लाघा ; किं त्वात्मनोऽतिवादित्वस्यानपह्नवः ॥

अस्याधिकरणस्य सगुणपरत्वं निर्गुणपरत्वमित्युभयमपीष्यत इव भवद्भिः । सूत्राक्षराणां सगुणब्रह्मपरत्व स्पष्टम् । प्रथमसूत्रोक्तं लयकर्तृत्वं तस्यैव लक्षणम् । यस्य चराचरसंहर्तृत्व तस्यैव प्रकरणमिति द्वितीयसूत्रात् स्पष्टमवगम्यते । अस्या उपनिषदो निर्गुणपरत्ववर्णनं श्रुत्यर्थनिर्णायकसूत्रविरुद्धम् ॥

वल्लयन्ते उत्क्रान्तिः श्राव्यमाणा निर्गुणपरत्वविरोधिनी , सगुणपरत्वनिश्चायिका च । सगुणविद्याफलकीर्तनेन निर्गुणविद्यास्तवनकथनममत्यन्तासमञ्जसं भवद्भ्य एव रोचेत । स्वप्रकरणे श्रूयमाणा गतिः स्वस्या एव अङ्गं भवेत् ॥

'अथात्र कल्पतरौ यत्र शुद्धं चराचरसंहर्ता तत्क इत्थमिति वेदेति शुद्धस्य दुःखबोधत्वशेषतया पूर्वभागस्य नयनेन किमर्थं तस्य ब्रह्मपरत्वव्यव-

स्थापनव्यसनमस्माकं जीवपरत्वेऽपीष्टसिद्धेरिति चेन्न । अनुग्रहार्थत्वात् । ये मन्दास्तेऽनुकम्प्यन्ते हि सविशेषनिरूपणैः' इति भवदुक्तेरसामञ्जस्यास्यावधिरेव नास्ति । एतयोक्त्या सगुणपरत्वमेव वर्णितं सूत्रकृता कठवल्या' इति स्पष्टमभ्युपगम्यते । मिथ्यैव सगुणपरतामसूत्रयत्सूत्रकृद्वास्तवनिर्गुणपरत्वापन्हुत्येति वर्णनं मृषारुचेरेव शोभनं भवेत् । श्रुतेर्यथार्थार्थनिर्णयायैव प्रवृत्तं ब्रह्मसूत्रम् । तथैव गीतं भगवता । 'पूर्वस्मिन् पादे मनोमयोऽत्ता पाययिताक्षिपुरुषोऽन्तर्यामी वैश्वानर इत्येषा सविशेषत्वेऽपि यथाऽक्षरं निर्विशेषम्' इति तृतीयपादाद्याधिकरणारम्भपरिमलोक्त्या भवदाशा दूरोत्सारिता । अत्तृगुहाधिकरणयोः सविशेषपरत्वं तत्र निष्कृष्टतयोक्तम् । सविशेषपरत्वं सूत्राणामभ्युपगम्य तद्विरोधेनात्र निर्गुणपरत्वेन सूत्रतात्पर्यवर्णनोद्यमो वृथैव । सगुणपरत्वमेव स्पष्टमनुगृह्यते सूत्राक्षरैः । निर्गुणपरत्वं तद्वर्णनं च स्पष्टं निगृह्यते । न वयं भगवदुपासका भवतो वा, कल्पतरुकृतो वाऽनुग्रहं मनागपि कांक्षामः । 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ॥' इति गुणपूर्णपुरुषोत्तमोपासकानामसमूढत्वं गायन् भगवांस्तदुपासितृविषयभवद्गर्हावचनस्य निग्राहकः । कामं निन्दतु भवान् वा, कल्पतरुकृद्वा मन्दा इत्यस्मान् । असंमूढा इति भगवता वयं सगुणोपासका अनुमोद्यामहे । तदनुग्रहादेव मोक्षसम्भवः ॥

"'यत्र सः' इति यस्मिन् प्रकारे स्थितः, यत्प्रकारविशिष्टस्तं प्रकारं को वेदेत्यर्थः." इति श्रुतप्रकाशिकोक्तार्थोऽतीव स्वरसो दुर्विज्ञेयत्वस्य पुनः पुनः कथनप्रकरणस्यात्यन्तानुगुणश्च ॥

'ब्रह्म प्राप्तः' इत्यन्ते नचिकेतसो ब्रह्मप्राप्तिं फलत्वेन कीर्तयन्ती कठवल्ली कर्मकर्तृव्यपदेशसूत्रन्यायेन प्राप्तृप्राप्यभेदमेव निश्चाययति । पूर्वाधिकरणे सूत्रितस्तन्न्यायो नानन्तराधिकरण एव विस्मर्तव्यः ॥

'तदत्रास्तु जीवपरत्वमेव का नो हानिरित्यौदासीन्ये कथमीश्वरस्य सिद्धिः । ... . ततस्तन्निर्णयाय प्रववृते सूत्रकार' इति भवदुक्तिरुपहास्यतमा । अस्मिन्नध्याये बहुष्वधिकरणेषु जीवपरत्वं पूर्वपक्षयित्वा तन्निरस्य तद्भिन्नेश्वरपरत्वं स्पष्टं सिद्धान्त्यते जिज्ञास्ये ब्रह्मणि जन्मादिलक्षणसमन्वयप्रदर्शनाय । 'जीवो वा भवतु, ईश्वरो वा भवतु, का नो हानि' इति सूत्रकारेणौदासीन्यमेव वोढव्यं भवन्मतसामञ्जस्यलाभाय । वृथैव परिश्रान्त सूत्रकृता जीवपरत्वनिरासद्वारेश्वरपरत्वसाधनेनेति भवता सूत्रकार एवानुकम्प्यत इव । निर्गुणपरत्वेन भवदभिमतविद्यानामपि सगुणे समन्वयप्रदर्शनेन निर्गुणवादो भज्यत एव । ईदृशासङ्गतोक्तिभिः कथकगोष्ठ्याः बहिर्भावः फलेत् । कैर्वा भवत्पूर्वैरीदृशासम्बद्धार्थवर्णनं प्रदर्शितमत्र ॥

निर्गुणे निर्विशेषे समन्वयं प्रतिज्ञाय कथं निर्गुणत्वेनाभिमतेऽस्मिन् प्रकरणे सगुणमेव सिद्धान्तयेत्सूत्रकृदिति भवन्मतव्याख्योपरि प्रसक्तस्य दुष्परिहरस्य दूषणस्य परिजिहीर्षया भवद्भिरुच्यते 'अथ परस्मिन्नेव समन्वय इति साधयितुं प्रवृत्तस्य कथं विशिष्टस्यावान्तरतात्पर्यविषयस्यात्र साधनं सङ्गच्छेतेति चेन्न । जन्मादिना ह्युपलिलक्षयिषितं ब्रह्म । तत्र यज्जन्मादिहेतुत्वविशिष्टं तत्सिद्ध्यधीनसिद्धिकं तदुपलक्षितमित्यावश्यकत्वाद्विशिष्टसाधनस्य' इति भवदुक्तिर्न क्षणमात्रविमर्दक्षमा । सगुणेश्वरसिद्ध्यधीना निर्गुणब्रह्मसिद्धिरिति भवदुक्तिरमूला । न तत्र काचिद्युक्तिः; प्रमाणं वा प्रदर्श्यते । तदभ्युपगमेऽपि, सिद्ध एवेश्वरो बह्वीषु सगुणपरत्वेन सम्प्रतिपन्नासु विद्यासु । पूर्वपादविचारितान्तरादित्यविद्या, एतत्पूर्वाधिकरणविचारिता शाण्डिल्यविद्या च सगुणपरत्वेन संप्रतिपन्ना । सिद्ध एव सगुणेश्वरस्तदधिकरणयोः । अत ईश्वरसिद्ध्यर्थं तत्त्वतो निर्गुणपराया अप्यस्या विद्याया मिथ्या सगुणेश्वरपरत्वेन सिद्धान्तनमिति न वक्तुं शक्यम् ।

किं प्रतिनिर्गुणविद्यं सगुणेश्वरपरत्वमप्यस्तीति भवदाशयः ? तथा चेन्निर्गुणत्वेनेष्टानां विद्यानामपि सगुणपरत्वाभ्युपगमेन निर्गुणसिद्धिः कष्टतरा भवेत् ; यत्परः शब्दस्तत्रैव तात्पर्यं वक्तुं शक्यम् । सगुणपरत्वस्याभ्युपगमे निर्गुणे तात्पर्यं न स्यात् । न ह्येकस्या एव विद्याया विरुद्धार्थद्वये तात्पर्यं वक्तुं शक्यम् । भवदीयवर्णितो विद्याविभागो दत्तजलाञ्जलिः स्यात् । एतदधिकरणेऽत्तृमन्त्रस्य सगुणेश्वरपरत्वं निर्णीय कुत्रान्यत्रैतस्य निर्गुणपरत्वमुक्तं सूत्रकृता । स्वाशयविरुद्धमेव सूत्रकारः सूत्रणं कुरुत इत्यापद्येत ॥

'येयं प्रेते' इत्यत्र प्रेते मोक्ष्यमाणे सतीत्यर्थमुपयन्ति परे । तत्र कथमास्तिकसार्वभौमस्य यमसमक्षमेव मृतजीवविषयसत्त्वासत्त्वशङ्का युक्तेति युक्तिं चाचक्षते । तत्र कथमेवमेते सशेरत इति संशेमहे । न हि चार्वाकेणैवाशङ्कनीयमास्तिकेन ; माध्यमिकेनैव वा शङ्कनीयमिति को वा शङ्केतास्तिकः' इति भवदुक्तिः ; 'अहह भाष्यादिप्रणेतारोऽप्यर्थवादिककथासु मोमुह्यन्ति मुग्धा इवेति किं सवृत्तम्' इति सोपहासा भवदुक्तिश्च भवन्तमेवोपहास्यतां गमयतः । उपहासकर्तृतारुचिं परित्याज्य तत्कर्मकारकता आपाद्यते भवतः । अर्थवादकथानामप्रामाण्यशपथेन भवन्मतानभिज्ञता भवता प्रख्याप्यत इति सुविशदमुपपादयिष्यामः । 'त्रयाणामेव चोपन्यासः प्रश्नश्च' इति सूत्रं कठवल्लीप्रश्नविषयम् । तृतीयवरेण जीवस्वरूपं परमात्मस्वरूपमित्युभयं पृष्टमिति तत्सूत्रव्याख्या भवद्ग्रन्थेषु । 'अन्यत्र धर्मात्' इति प्रश्नो न प्रश्नान्तरम् , किं तु 'येयं प्रेते' इति पृष्टविषय एव विशेषबुभुत्साप्रदर्शनमित्यावयोः समानम् । एवं च 'येयं प्रेते' इति न मरणानन्तरं जीवास्तित्वनास्तित्वमात्रविषयकपिपृच्छिषेति सूत्रकारीयव्याख्यानादेव सुस्पष्टम् । अत उपनिषद्भाष्ये 'येयं विचिकित्सा संशयः प्रेते मृते मनुष्येऽस्ति शरीरेन्द्रियबुद्धिमनोव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मेत्येके नायमस्तीति चैके' इति भाषणं सौत्रव्याख्यानविरुद्धम् । पूर्वाधिकरणविषयभूत-

शाण्डिल्यवाक्ये 'एतमितः प्रेत्याभिसम्भवितास्मि' इति प्रेत्यपदं चरमशरीरवियोगे प्रयुक्तम् । 'न प्रेत्य संज्ञास्ति' इति मैत्रेयीयाज्ञवल्क्यसंवादे च तथैव प्रयुक्तम् । तथैवात्र प्रयोगो भवितुमर्हति । 'संसारिणां ये मरणान्तकालास्तेऽपरान्तकालाः, तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालः' इति मुण्डकभाष्ये भगवत्पादभाषितमप्यत्र स्मर्तव्यम् । जीवस्य मरणानन्तरानुवृत्तत्वमात्रविषयत्वेन शङ्कावर्णनमसङ्गतम्; मन्दं च । 'देवैरत्रापि विचिकित्सितं पुरा' इत्यत्र गुरुणोच्यते । देवानां मरणानन्तरमात्मनोऽस्तित्वविषये संशयोऽस्तीति भवानेव भाषेत । यद्विचिकित्सितं देवैस्तदेव पृष्टं नचिकेतसेति गुरुकृता प्रश्नप्रशंसा । 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः' इत्यत्यन्तापूर्वत्वमुच्यते गुरुणा शिष्यबुभुत्सितविषयस्य । न तेन सर्वास्तिकलोकसंप्रतिपन्नेन प्रेत्यभावमात्रेण भवितुं न्याय्यम् ॥

प्रष्टृबुभुत्सितनिर्णयाय किं तेन पूर्वं ज्ञातमित्यवश्यं विमर्शनीयमेव । तद्बुभुत्सितं किमिति विचारे किं तस्य पूर्वविदितमिति विचारणा निरर्थिकेत्युक्तिः साहसिकी । अज्ञातविषयैव बुभुत्सा भवेत् । प्रष्टुः स्वप्नावस्था वा भवतु, जागरावस्था वा भवतु । न तेन कोऽपि भेदः । 'सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः' इति वक्ता नचिकेता ध्रुवं प्रेत्यभावस्य वेत्ता । 'स्वर्गे लोके न भयं किंचनास्ति' स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो' इति वदन्न प्रेत्यभावमात्रविषयाज्ञः । 'येयं प्रेते' इति प्रश्नस्यैवोत्तरं दीयते मृत्युना 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति । स्वाधिगमवते हर्षशोकहानफलदाता देवः प्राज्ञ एव भवेत् । 'प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः' इति भगवत्पादा आनुमानिकाधिकरणे । प्राज्ञश्चेश्वरः परमात्मा । 'प्राज्ञो हि प्रकरणात्' इति तदधिकरणे सूत्रितम् ।

एवं च 'प्राज्ञविज्ञानरूपसाधनं ब्रह्मप्राप्त्या हर्षशोकहानरूपपुरुषार्थश्च' बुभुत्सितान्तर्गते इति स्पष्टम् ॥

'अस्तीत्येके' इति पुरुषार्थोस्तत्त्वतत्प्रकारतत्साधनादिविषयापि पृच्छैवावगन्तुं योग्या ॥

'अस्तीत्येके' इत्यत्रैकेशब्देन 'एके वेदान्ताः' इत्यसद्व्याख्यानमिति भवद्वर्णनमत्यन्तं भ्रान्तम् । पुरुषार्थस्वरूपविषये लोकप्रसिद्धमतभेद एवानूद्यते श्रीभाष्ये यथा 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति सद्विद्यायां वाद्यन्तरपक्षोऽनूद्यते । तत्र एकेशब्दः 'एके वेदान्ताः' इति नैव व्याख्यायते कैरपि । 'त्वत्यन्तनिष्णातास्तु' इति श्रीभाष्यभाषिततुशब्देन तत्पूर्वोदाहृतानां पक्षाणामवेदान्तिपक्षत्वं स्पष्टं सूचितम् । अवेदान्तीयत्वेन तदभिप्रेतेषु मतेषु भवन्मतमप्यन्यतमम् । केवल वित्तिमात्रस्यैव परिशिष्टतयाऽवस्थानं मुक्तिरिति भाषितं योगाचाराणां भवतां च कथञ्चित् समानम् । न योगाचारो वेदान्ती ।

एके इति वेदान्तिमतानुवादः कृतः श्रीभाष्ये इति भवद्ग्रहणं अमूलम् । एतेन 'तत्र यदि शास्त्रीयपक्षान्तरतयाऽयमद्वैतपक्ष उपेयते तदात्रैवापूर्वं पर्यवसानस्य वक्तव्यतया स्वपक्षप्रतिक्षेपायैव यतन्त इति पर्यवस्यति' इति भवदुक्तिर्निरस्ता । योगाचारवर्णितं वित्तिमात्रपरिशेषं वदद्भिर्भवद्भिस्तस्यापूर्वत्वकथनं नूनमुपहास्यम् ॥

केवलस्वरूपावस्थानमेव मुक्तिरिति साङ्ख्याः । प्रकृतेरेव मोक्षो नात्मन इत्यपि ते वदन्ति । 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः' ॥ इति तत्कारिका । पुरुषार्थभूतमोक्षविषयत्वात्प्रश्नस्य, तच्छोधनमिष्यते तद्विषयभूयोविप्रतिपत्तिप्रदर्शनेन श्रीभाष्ये ॥

प्राप्यमोक्षविषयप्रश्ने प्राप्यभूतस्वशुद्धस्वरूपस्य प्राप्यब्रह्मणश्च शोधनमप्यन्तर्भवति । प्राप्तुः प्राप्यब्रह्मपरमसाम्यापन्नं शुद्धं स्वस्वरूपमपि

प्राप्यकोटिप्रविष्टमेव । 'व्यतिरेकस्तद्भावभावित्वात्' इति सूत्रम् । 'तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्' इति श्रीभाष्यम् । स्वस्वरूपाविर्भावश्च परज्योतिर्ब्रह्मोपसंपत्तिं विना न लभ्येत । 'संपद्याविर्भाव' इति सूत्रम् । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति तत्सूत्रपरामृष्टा श्रुतिः । ब्रह्मानन्यत्वस्य वास्तवत्वात्, तदविभागेनावस्थाय तदानन्दानुभवस्य प्राप्यत्वात्; जीवब्रह्मस्वरूपशोधनमपि परमपुरुषार्थविषयप्रश्नेन पृष्टमेव ॥

पूर्वपृष्टमेव विव्रियते 'अन्यत्र धर्मादन्यत्राधर्मात्, अन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इति । लोकप्रसिद्धकृताकृतधर्माधर्मरूपसाधनविलक्षण फलकामनारहित साधनमभिप्रेतम् । अन्यत्र अन्यत्रेति पुनः पुनः पठनेन विदितात्सर्वस्माद्वैलक्षण्यमत्यन्तापूर्वत्वम्, उपदेशैकगम्यत्वं च पृष्टविषयस्य द्योत्यते ॥

'प्रेते मनुष्येऽस्ति किम्' इति प्रश्नस्य पुरुषार्थास्तित्वविषयत्वं स्वरसम् । अस्तित्वमात्रस्य न पुरुषार्थत्वम्, दुःखासिकाया अपि संभवात् । 'पुनरुत्पत्तिः प्रेत्यभावः' इति गौतमसूत्रम् । 'उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः' । नात्र पुनर्जन्मपरम्पराविषयः प्रश्नः । किं तु जन्मपरम्परोच्छेदे किं भवतीति बुभुत्सा स्वरसा ॥

'अहह भाष्यादिप्रणेतारोऽप्यार्थवादिककथास्वपि बद्धादरा मोमुह्यन्ति मुग्धा इवेति किमिदं संवृत्तम्' इति भवदुक्तिर्भवतां स्वमतविस्मरणं मोहसप्लवे बम्भ्रम्यमाणत्वं च सुविशदं कथयति । अर्थवादवाक्यानां श्रुत्यर्थवर्णनानुपयोगित्वं भवानेव भाषेत । 'मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वात् । न च तेषां कश्चित्प्रतिषेधोऽस्ति' इत्यबाधितार्थवादानां प्रामाण्यं भाषितं भगवत्पादैर्देवताधिकरणे । 'भावं तु बादरायणोऽस्ति हि' इति सूत्रस्य भाष्ये विस्तरेणार्थवादाप्रामाण्यपक्षो निरस्तः । 'यत्रार्थवादस्या-

वान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति ; तत्र तदनुवादेनार्थवादः प्रवर्तते । यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन । यत्र तु तदुभय नास्ति, तत्र प्रमाणान्तराविरोधाद्विद्यमानवाद इति प्रतीतिशरणैर्विद्यमानवाद एवाश्रयणीयः ; न गुणवादः । एतेन मन्त्रोऽपि व्याख्यातः । इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम्' इत्यादिकं तत्र भाषितम् । पारिप्लवाधिकरणे 'तथा चैकवाक्योपबन्धात्' इति विद्याप्रकरणपठितानां सन्निहितविद्यैकवाक्यत्वं सूत्रितम् । तथैव भवद्भाष्यवर्णितोऽर्थः । प्रद्वेषमात्राविष्टत्वेन परिप्लवं धावन्त्या भवन्मत्या कल्पितमिदं भवन्मतं सूत्रकारस्य भवद्भाष्यकारस्य च पूर्वपक्षित्वं भजते । इत्थं च भाष्यस्य सूत्रानुगुण्यं सिषाधयिषन् भवांस्तदुभयपूर्वपक्ष्येव भवति । श्रीभाष्योदाहृतश्रुतयो मन्त्राः । तद्विषयेऽप्येष न्यायस्तुल्यः । यद्यपि यमनगरस्थनारकिणा यातनाशरीरमस्ति ; तथापि पूर्वशरीरपरित्यागानन्तरमपि तेषामस्तित्व विदितमेव भवेत् । नरकलोकद्रष्टुर्नचिकेतसो मरणानन्तरमात्मास्तित्वमात्रे विचिकित्सा न शक्यशङ्का । मरणानन्तरास्तित्वमात्रे खलु भवत्प्रदर्शिता विचिकित्सा । नात्मनः सशरीरत्वाशरीरत्वस्वभावविषये । 'मनुष्यमात्रेण सहसैव प्राप्तं यमसदनमिति कल्पयितुं न शक्यम् । अतः स्वप्न एव भवति नचिकेतसः' इति भवदुक्तिः स्वाप्निकी । न स्वप्नो नचिकेतसः । भवत एव स्वप्नो वा, माया वा ; अन्यद्वा वर्ततेऽत्र । ब्रह्मविद्योपाख्यानानां स्वाप्निकत्वं कुतोऽवगतं भवद्भिरिति वयं न जानीम । 'उक्तं तु शब्दपूर्वत्वं' इत्यादिसूत्रे जैमिनिना ; 'अत एव च नित्यत्वम्' इति बादरायणेन च नित्यत्वेन साधितानां वेदानामेव स्वाप्निकत्वम्, मिथ्यात्वं च वर्णयतां भवतां वेदवर्णितपुरुषाणां स्वाप्निकत्वाश्रयणं न चित्रम् ॥

यमसदनस्य वा, तद्गमनस्य वा स्वाप्निकत्वाश्रयणेन को लाभो भवता प्रकृतविषये । स्वप्नायमानो नचिकेताः स्वप्नदृष्टपदार्थज्ञानवानेव । तद्विष-

जीवप्रकरणमिति पूर्वपक्ष्याक्षेपः 'न जायते म्रियते वा विपश्चित्—इत्यादि-ऋग्द्वयोदाहरणेन । तयोर्ऋचोर्जीवपरत्व भगवतैव गीतम् । अक्षरपर्यालोचनेनापि तयोर्जीवपरत्वं शक्रेणापि दुरपह्नवम् । प्राकृतशरीरवत एव शरीरस्य हन्यमानत्वं वक्तुं शक्येत । संसारिणः शारीरादन्यस्य कथं तत्सम्भव. १ ''अणोरणीयान्' इत्यनन्तरमन्त्रादारभ्य 'यस्य ब्रह्म' इति ऋक्पर्यन्तं ब्रह्मप्रकरणमित्यावयोरविगीतम् । 'यद्यपि जीवप्रकरणमभूत् 'न जायते' इत्यादिऋग्द्वये, तद्विच्छिन्नमणुमन्त्रादारभ्य; ततः प्रभृति ब्रह्मप्रकरणम्' इति सिद्धान्त्युक्तिः 'प्रकरणात्' इति । द्वितीयसूत्रे 'न जायते' इत्यादिजीवविषयमन्त्रयोरुदाहरणं जीवपूर्वपक्ष साधयेदिति विपरीतमेवापतेत् ॥

प्रलयकर्तृत्वस्य करुणाकाष्ठात्वमिति प्रदर्शितमस्मद्ग्रन्थेषु । तदनुसारेणोक्त परिमले 'संहर्तृत्व च संसारपरिश्रमणखिन्नान् प्राणिनः कञ्चित्कालं महासुषुप्त्या विश्रान्तिं प्रापयितुमिति न तत्तस्य दोषावहम् । ' इति । संहर्तृत्वप्रयुक्तनैर्घृण्यदोषशङ्का द्वितीयाध्याये परिहरणीया ; नात्र । भवदुक्तस्य साधुत्वे सृष्टिप्रयुक्तवैषम्यनैर्घृण्यशङ्काऽत्रैव परिहरणीया स्यात् ॥

पूर्वाधिकरण एव तत्त्वं प्रसिद्धत्वेनोक्तम् । तत्रैवैतच्छङ्का समुत्तिष्ठेत्॥

ईश्वरास्तित्वमभ्युपगम्य तस्यापि मरणम् , संहार्यत्वं वा केनापि न शक्येत ॥

'न बभूव कश्चित्' इति श्रुतिखण्डस्य 'न बभूव कश्चिदस्मात्' इत्यर्थवर्णनं जीवव्यतिरेकेण ब्रह्मसिद्धान्तनरूपाधिकरणविरुद्धम् । जीवो वा, ब्रह्म वेति विशये 'जीव एव नास्ति' इत्युत्तरं नैव दीयते सूत्रकृता । न तथाऽधिकरणशरीरम् । पूर्वाधिकरणे सिद्धान्तिनोपन्यस्ता कर्मकर्तृव्यपदेशादयो जीवब्रह्मभेदकहेतवोऽत्रापि बहवः सन्ति । प्राप्यप्राप्तृभावः, उपास्योपासकभावः , वरितृवरणीयभावः , अनुग्राह्यानुग्राहकभावश्चात्र स्पष्टं दृश्यन्ते । पूर्वाधिकरणेऽभेदं बहुभिर्हेतुभिर्निरस्यात्र तस्यैव सिद्धान्तन भव-

तामेव शोभनं भवेत् । शोभनं वाऽशोभनं वा भवतु, कस्तत्र सूत्राक्षरानुग्रहः । जीवलिङ्गानां स्पष्टत्वम् ; ब्रह्मलिङ्गानामस्पष्टत्वमत्रेति खलु भवन्मतस्थितिः । किमेकस्यैवात्मनो लिङ्गं स्पष्टमस्पष्टं च भवेत् ? चराचरग्रहणहेतुना जीवव्यवच्छेदः कृत इति सप्रतिमन्नम् । 'तथा चराचरसंहर्तृत्वं परमात्मन एव । नाग्नेर्नापि जीवस्य' इति भामतीनिगमनम् । जीवस्यैव ब्रह्माभिन्नत्वे जीवो वा, ब्रह्म वेति विशयो वा, ब्रह्मैव न जीव इति सिद्धान्तो वा कथं सङ्गच्छेत ? सूत्रोपात्तस्य सर्वसंहर्तृत्वरूपलिङ्गस्य ब्रह्मण्यनन्वयः स्याद्भवदुक्तरीत्या सहार्यप्रपञ्चस्यैवासत्त्वे । प्रथमसूत्रोपात्तसिद्धान्तहेतुरेव प्रतिषिद्धो भवेदनन्तरसूत्रेण । आत्मान्तराभावोक्तौ पूर्वसूत्रोक्तचराचरसंहर्तृत्वस्यात्मघात एव पर्यवसानं स्यात् । आत्मघातुकत्वं महते गुणाय भवेत् ॥

'एकत्ववचनाच्च । जीवपरत्वे कथमेकत्वमुपपद्येत' इति भवतां विचित्रोऽनुयोगः । जातावेकवचनानुशासनं विस्मृतं भवद्भिः । पाशाधिकरणमपि विस्मृतम् । यद्येकवचनमेकत्वनिश्चायकं 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यत्रत्यमन्त्रे जीवविषयबहुवचनप्रयोगो जीवबहुत्वं निश्चाययेत् ॥

'विपश्चित्त्वलिङ्गाच्च' इति भवदुक्तिरपि सुनिरसा । यद्यपि विपश्चित्त्वं निरुपाधिकमनन्यायत्तं च ब्रह्मणि, तत्प्रसादेन जीवस्यापि तदाविर्भविष्यति ॥

भूयोभिर्लिङ्गैरेतन्मन्त्रस्य जीवपरत्वं निश्चेतुं शक्यम् । भूयसां स्याद्बलीयस्त्वम् । भगवद्व्याख्यानेन वयं सर्वे बद्धा एव । तद्व्याख्यानविरुद्धं व्याख्यातुं नास्ति स्वातन्त्र्यमास्तिकानाम् । जीवपरतयैव व्याख्या कृता गीताश्लोकयोरेतद्द्वयैकार्थत्वभाषणपूर्वकं भवदीये गीताभाष्ये । 'एतस्यार्थस्य साक्षीभूते ऋचावानिनाय भगवान् । यत्तु मन्यसे युद्धे भीष्मा-

दयो मया हन्यन्ते , अहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव ते' इति भगवत्पादीयगीताभाष्यम् । श्रुतिक्रमो विपर्यस्तो दृश्यते गीतायाम् । अस्ति तत्र हेतुः—'कथं भीष्ममहं संख्ये .. ....इषुभिः प्रतियोत्स्यामि' 'गुरूनहत्वा हि महानुभावान्' इति गुरुहननं प्रति स्वस्य कर्तृत्वबुद्धिः खलु शोके प्रधाननिमित्तत्वेन प्रदर्शिता । सा मोहबुद्धिः प्रथमनिरसनीयेत्युत्तरस्या ऋचः प्रथमोदाहरणम् ॥

'न त्वेवाहं जातु नासम्—' इति गीताश्लोके ईश्वरस्य पृथक्त्वं जीवानां मिथो भिन्नत्व च स्पष्टमुच्यते । कर्मोपासनार्थं तथोपादेशीति भवदुक्तिरमूला । पूर्वश्लोके पण्डितान्निर्दिश्य पण्डितमतं खलूपपाद्यते 'न त्वेवाहम्' इति । कर्मठा उपासकाश्च पश्वादिभिरविशिष्टा मन्दा इति खलु भवदीयो ग्रहः ॥

'एक एवायमात्मा , त्वयि मयि च सर्वत्र परमेश्वरः , तस्य कुतो मरणम् ? तस्य कुतो वा जनिः ? तथा हि श्रुतिरितीदमवतारितं यदि कुतो भगवद्वचनविरोधश्च' इति विचित्रा भवदुक्तिः । 'उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा' इति रामविषये उक्तं कृष्णे भवत्याज्ञस्यमश्नुवीत । नान्तोऽस्ति भवदीयासङ्गतवचनपरम्परायाः । 'त्वयि मयि सर्वत्र परमेश्वर एक आत्मा' इत्युक्ते परमात्मनः स्थितिरेवोक्ता भवेत् । परमेश्वरस्य मरणशङ्का न कृताऽर्जुनेनास्तिकाग्रेसरेण । अतस्तदुपदेशस्यानवसर एव । अज्ञातं खलूपदेष्टव्यम् । 'न त्वेवाहं जातु नासम्—' इति भगवन्नित्यत्वोपन्यासो दृष्टान्ततयैव । अस्मदीयगीताभाष्यादिष्विदं स्पष्ट प्रदर्शितम् । भवद्भाष्येऽपि तथैव सूचितम् 'तथा न त्व नासीः , किं त्वासीरेव' इति तथाशब्देन । पूर्वविदितस्य संप्रतिपन्नस्य दृष्टान्तत्वेनोपन्यासो न्याय्यः । भवदुक्तासङ्गतावतारिका भवद्भाष्यविरुद्धा । 'ईश्वरनित्यत्वस्याप्रस्तुतत्वात् दृष्टान्तत्वेनाह' इति श्रीमन्मध्वमुनयः । भाष्यत्रयमप्यत्रैककण्ठम् । भव-

द्भाष्यपरित्याग कर्तव्यो भवति भवतामसद्भाष्यदूषणाय ॥

'तदुदाहृत तु न क्वाप्युपयुज्यत इति , भाष्योदाहृतमेव प्रकरणा नुगुणम्' इति भवदुक्तिर्भवता स्वमतापरिज्ञानमेव द्रढयति ! असद्भाष्यो दाहृता प्रकरणपठिता ऋचः 'महान्तं विभुमात्मानम्' 'नायमात्मा' इत्या द्या ब्रह्मविषयत्वेन संप्रतिपन्ना द्वितीयसूत्रविषयतया भवन्मतसम्मता एव न तत्र मतयोर्विगानम् । ओदनऋचः पूर्वपठिता इमा ऋचा विवक्षित एव प्रकरणसूत्रेण एतासां ब्रह्मपरत्वात् । न जायते इत्यादिऋग्द्वयस्य जीव विषयत्वं उत ब्रह्मविषयत्व इत्यत्रैव विवादः ॥

'परेणाहेमकः प्रथममासं वर्तामि च भविष्यामि चेत्युक्तम्' इति भवदुदाहृतश्रुत्या किं सिद्ध्यति भवतः । इयं श्रुतिः 'शास्त्रदृष्ट्या तूप- देशो वामदेववत्' इति सूत्रेण परामृष्टविषयवाक्यद्वये एकमित्यस्मदीयाः । वामदेवशब्दो रुद्रे रूढः । 'सोन्तरादन्तरं प्राविशत्' इत्यन्तर्यामिणि ब्रह्मण्यात्मानं पर्यवसाय्येदमुक्तं शास्त्रदृष्ट्या । ब्रह्मण एव निरुपाधि- कानन्याधीनस्वतन्त्रसत्त्वम् ॥

अनन्तरसूत्रद्विकस्यैतदधिकरणगुणसूत्रत्वं साधितं बह्वीभिर्युक्तिभिः श्रुतप्रकाशिकायाम् । ओदनमन्त्रानन्तरमन्त्रो गुहामन्त्रः । अस्मिन्न- ध्याये त्रिषु पादेषु कठवल्लीसमन्वयः क्रियते । अस्मिन्नधिकरणे ; तृती- यपादे प्रमिताधिकरणे , तुरीयपादे आनुमानिकाधिकरणे च । मृत्यूप- सिक्तब्रह्मक्षत्रौदनात्तृत्वस्य जीवेऽस्पष्टत्वादस्मिन् पादे तद्भागविचारः । अङ्गुष्ठमात्रप्रमितत्वस्य 'अङ्गुष्ठमात्र पुरुषं निश्चकर्ष यमो बलात्' इति जीवे स्पष्टत्वात्तद्भागस्य तृतीये विचारः । 'महतः परमव्यक्तम्' इति लिङ्गि- प्रधानप्रतिपादनच्छायायाः सत्त्वात्तद्भागस्य तुरीये विचारः । 'य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः सांख्यस्मृतिप्रसिद्धास्त एवेह प्रत्य- भिज्ञायन्ते' इति तदधिकरणे भवदीयभाष्यम् ॥

गुहासूत्रस्य गुणसूत्रत्वं सूत्राक्षरेभ्यः सुगमम् । हीति हेतुत्वकथनं संप्रतिपन्नम् । यस्मादिति तदर्थः । यस्माद्गुहाप्रविष्टावात्मनाविति प्रथमखण्डार्थः स्पष्टः । तद्दर्शनादिति तत्साधको हेतुः । चेतनयोस्तदुभयोरपि गुहाप्रविष्टत्वेन श्रुतिप्रदर्शनादित्यर्थः । गुहाप्रविष्टत्वेनास्यां वल्ल्यां श्रुत्यैव प्रदर्शितयोर्जीवपरमात्मनोरोदनमन्त्रानन्तरमन्त्रे 'गुहां प्रविष्टौ' इति प्रतिपाद्यमानत्वान्न परमात्मप्रकरणविच्छेदशङ्का कार्या । अतोऽत्ता परमात्मैवेति सूत्रार्थः ॥

अत्तृसूत्रोक्तमोदनमन्त्रस्य ब्रह्मपरत्वं पूर्वप्रकरणबलेन दृढीकृतं द्वितीयसूत्रेण । ब्रह्मप्रकरणमाक्षिप्यते पूर्वपक्षिणा अव्यवहितानन्तरगुहामन्त्रस्याब्रह्मपरत्ववर्णनेन । प्राणजीवौ वा बुद्धिजीवौ वा तत्र वर्ण्येते इति पूर्वपक्ष्यभिमानः । 'प्राणबुद्ध्यन्यतरेण सद्वितीयो जीवो यद्यनन्तरमन्त्रे प्रतिपाद्यते, तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्तापि स एव भवितुमर्हति' इति श्रीभाष्यम् । 'गूढमनुप्रविष्टम्' इति ब्रह्मणः, 'गुहां प्रविश्य तिष्ठन्ती' इति जीवस्य च गुहाप्रविष्टत्वं श्राव्यते । अदितिमन्त्रे कर्मफलात्ता जीवोऽदितिरित्युच्यते ॥

यस्मादित्यर्थकेन हिशब्देन सूत्ररूपमहावाक्यस्य किञ्चित्साध्यं प्रति हेतुत्वं स्पष्टमवगम्यते । अनुमानवेषाणि वा, अनुमानगर्भाणि वा सर्वाणि सूत्राणि । अनुमानवेषतामात्रेण न गुणसूत्रत्वाभावः । 'यावद्विकारं तु विभागो लोकवत्' इति गुणसूत्रस्य पक्षसाध्यदृष्टान्तविशिष्टानुमानप्रदर्शकत्वं संमतम् । तेन वियदनुत्पत्तिः साध्या । 'प्राज्ञो हि प्रकरणात्' इति गुणसूत्र इवात्र हिशब्दघटितः सूत्रविन्यासः ॥

'सूत्रे गुहां प्रविष्टौ जीवपरौ' इति साध्यमध्याहार्यमिति न्यायरक्षामणिः । पूर्वसूत्रोक्तप्रकरणस्य विच्छेदशङ्कानिरासस्य साध्यत्वेन प्रकरणालभे साध्याध्याहारो न न्याय्यः । अस्मिन्नध्याये न कुत्रापि प्रतिज्ञासूत्रे

हिशब्दप्रयोगो दृश्यते । जीवादिनिरासमुखेन ब्रह्मसिद्धान्तनमध्याय-कृत्यम् । न जीवपरमात्मनोरुभयोरपि समन्वयप्रदर्शनम् ॥

गुहां प्रविष्टाविति भवन्मते पक्षनिर्देशः ; जीवपराविति साध्याध्याहारश्च । पक्षस्य ब्रह्मत्वमेव साध्यं समन्वयाध्याये , न जीवत्वम् । 'अतन्मीमांसात्वात्' इति भवदुक्तमत्र स्मर्तव्यम् । सजातीयशून्येऽद्वितीये ब्रह्मणि समन्वयमिच्छतां जीवपरमात्मनोरुभयोरपि समन्वयप्रतिज्ञानं भवन्मतमेव भञ्जयेत् ॥

'प्रकरणाच्च' इति सूत्रस्थप्रकरणशब्देन परमात्मप्रतिपादकवाक्यसन्दर्भमध्यगतत्व विवक्षितम् । तदाक्षिप्यते उत्तरमन्त्रस्यान्यार्थत्वप्रदर्शनेन ॥

हिशब्दवैयर्थ्यं भवन्मते । 'तद्दर्शनात्' इत्यनेन पुनरुक्तत्वात् । अर्भकौकस्त्वसूत्रेणैकस्यामेव हृदयगुहाया जीवपरमात्मनोरुभयोरवस्थितिरुक्ता । न तस्य पृथगधिकरणेन समर्थनापेक्षा ॥

'गुहाप्रवेशनावनमत्रोच्यते । तदनत्वमत्रोपपाद्यते' इति भवदुक्तिः । गुहाप्रवेशरूपावनमर्भकौकस्त्वसूत्र एवोक्तम् । तज्जत्वतदनत्वे तदधिकरणोक्ते ; तल्लत्व चात्राधिकरण इति वस्तुवृत्तक्रमोऽनुसृतो भवेत् । पाठक्रमादर्थक्रमो बलीयान् । श्रुतिक्रमान्वेषणनिर्बन्धे , अनन्तरेऽन्तराधिकरणे 'एष ह्येव वामनी.' इत्यवनमुच्यत इति श्रुतिक्रमानुसारवर्णनं सुशकम् ॥

'सूत्रभङ्गी चैकाधिकरण्य एवोपपद्यते । एकस्मिन्सूत्रे हिशब्दपञ्चम्यन्तपदयोः श्रवणात् । गुहाप्रविष्टयोरात्मत्वसाधकं पञ्चम्यन्तपदम् । अत्तुः परमात्मत्वोपपादकत्वं दर्शयति हिशब्दः ।' इति श्रुतप्रकाशिका । आत्मानाविति साध्यसमर्पकपदमस्माकम् । भवतां तु 'आत्मानौ हि' इति हेत्वन्वयः । पक्षपदानन्तरमेव विवक्षितसाध्यसमर्पणक्षमे आत्मानाविति पदे दृश्यमाने, तदुज्झित्वा जीवपराविति साध्याध्याहारोऽत्यन्ताचतुरः । 'सिद्धमन्नं परित्यज्य भिक्षामटति' इति न्यायोऽत्र स्मर्तव्यः । ओदनप्रकरण-

मिदम् । 'गुहां प्रविष्टौ—' इति पूर्वपक्षबीजसूचनमिष्यते भवन्मते । 'गुहां प्रविष्टौ' इति सिद्धान्तहेतुसूचनमस्माकम् ॥

'ऋतपातृत्वम्' अत्र मन्त्रोपक्रमे श्रूयते । ऋतं नाम कर्मफलम् ; अवश्यंभावित्वात्, कदाप्यवितथत्वात् । 'पिप्पलं स्वाद्वत्ति' इति समानार्थके मुण्डकमन्त्रे ऋतस्य कर्मफलस्यादनमुक्तम् । ब्रह्मक्षत्ररूपौदनस्य यद्यपि गौणत्वं पक्षद्वयेऽपि तददनं भोक्तृत्वं वा, संहर्तृत्वं वेति विशयः । ब्रह्मक्षत्र-पुरुषाणां भृत्यभावेन भोग्यत्वं वर्ण्यते पूर्वपक्षे । भोक्तृत्वं निरस्य संह-र्तृत्वमुक्तं सिद्धान्तिनाऽत्तृसूत्रे । ओदनमन्त्रानन्तरमन्त्रे ऋतपानस्य कीर्तनात् अत्तृत्वं भोक्तृत्वमेव भवत्विति पुनः शङ्क्यते । मुण्डकमन्त्रपरामर्शेन पातृत्वस्याप्यत्तृत्वार्थकत्वात्, भोक्तृत्वरूपात्तृत्वस्य पुनः शङ्का ॥

पाता जीवः । पाययितेश्वरः । उभयोरपि पानक्रियायां कर्तृत्वा-न्वयः । एकः प्रयोज्यकर्ता । अन्यो हेतुकर्ता । एवं च्छत्रिन्यायाश्रयणं विनैवोभयोः पानकर्तृत्वप्रदर्शनम् । ''यः कारयति स करोत्येव' इत्याहुः' इति भामती । 'विशेषणाच्च' इति सूत्रमपि भवदभिमतस्यात्मैक्यस्य स्पष्ट-निरासकम् । कर्मकर्तृव्यपदेशादयो जीवब्रह्मभेदकहेतवोऽत्र भूयो दृश्यन्त इति सूत्रार्थः । तथैव व्याख्यातं भवद्भाष्येऽपि ॥

द्वा सुपर्णेति मुण्डकमन्त्रस्यानन्तरमन्त्रे 'जुष्टं यथा पश्यत्यन्यमी-शम्' इत्यन्यशब्देन स्पष्टं भेदो व्यपदिश्यते । तस्य च जीवब्रह्मभेदगमकत्वं स्पष्टं सूत्र्यते द्युभ्वाद्यधिकरणे 'भेदव्यपदेशात्' इति । 'अनीशया ' इति जीवस्यानीशत्वमुक्त्वा, 'अन्यमीशम्' इति स्पष्टं ब्रह्म तद्भिन्नत्वेनावगमयति चक्षुर्भूता माता श्रुतिः ॥

'सूत्रं त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजितव्यम्' इति भवदी-यभाष्येण सूत्राक्षराणामभेदपरिपन्थित्वं स्पष्टमभ्युपगम्यते । 'तु' इति सूत्रस्य स्वाशयविरुद्धत्वमेव स्पष्टीक्रियते आर्जवमनुसृत्य ॥

उपसेचनपदस्य स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वमिति स्वरसोऽर्थोऽस्मद्भाष्य एव प्रथम प्रदर्शितः । भवदीयभाष्ये 'अशनत्वेऽप्यपर्याप्तः' इत्यर्थो वर्णितः । 'अन्नत्वेऽप्यपर्याप्तः, शाकस्थानीयः' इत्यानन्दगिरिः । अस्मद्वर्णितोऽर्थो वर्णितो न्यायरक्षामणौ ॥

'अत्तेति सूत्रे स्ववाक्यस्थहेतुरुक्तः । प्राकरणिकपूर्ववाक्यस्थहेतुपर द्वितीयम् । अनन्तरवाक्यशङ्कापरिहारपरं तृतीयम् । अतस्तत्र चशब्दाप्रयोगः । उपरितनवाक्यस्थहेतुभिस्तृतीयसूत्रार्थोपपादक चतुर्थमिति सूत्रसङ्गतिः' इति क्रमप्रदर्शनं श्रुतप्रकाशिकायाम् ॥

## अन्तराधिकरणम् ॥

आनन्दमयाधिकरणेन सङ्गतिः प्रदर्श्यते भवद्ग्रन्थे । 'आनन्दमयस्याप्यन्तरतया निर्धारितमानन्दमयाधिकरणे पुच्छ ब्रह्म । स एव सुखविशिष्टतया संयद्वाम सर्वेषामपि वामानां भामानां चोपनायकमक्षिण्येव दृश्यमानमुपास्यं कं खं विशिष्टगतिप्राप्यं च विचार्य निश्चेतव्यमित्याह' इति भवदवतारिकाग्रन्थः । आनन्दमयादन्यदन्तरं पुच्छं ब्रह्म निर्गुणं भवन्मते । अक्ष्यन्तरं सगुणम् । एतद्विस्मृत्योभयोरभेदो वर्ण्यते भवद्भिः । यदि सगुणस्यैव निर्गुणमिति पारिभाषिकमभिधानं प्रतिवादित्वं निवर्तेत ॥

भवदुक्ता नूतना सङ्गतिर्न भवत्पूर्वेषामनुग्रह भजते । 'उपक्रमवशात्पूर्वमितरेषां हि वर्णनम् । कृतं न्यायेन येनैव स खल्वत्रानुषज्यते ।' इति भामतीकारिकया पूर्वेण भवदीयगुहाधिकरणेन सङ्गतिरुक्ता । 'उपक्रमवशादित्यनेन सङ्गतिश्चोक्ता' इति कल्पतरुः ॥

"'गूढोत्मा न प्रकाशते' 'तं दुर्दर्शं गूढमनुप्रविष्टम्' 'क इत्था वेद' इति परमात्मा दुर्दर्शश्चेत्सुदर्शतया प्रसिद्धत्वेन निर्दिष्टो न परमात्मा भवितुमर्हतीति शङ्कया सङ्गतिः" इति श्रीमत्सुदर्शनसूरिप्रदर्शिता सङ्गतो

रसिकलोकानुभाव्या ॥

'पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मात्तद्वत्र ब्रह्मविद्यानुनीतिरिति भवदक्षिविद्या ततोऽन्या' इत्यधिकरणसारावल्यां पूर्वविद्यानन्तरमस्या विद्याया विचार्यत्वमुक्तम् । अधिकरणत्रयमेका पेटिका । उत्तराधिकरणत्रयमपरा पेटिका । प्रथमपेटिकायामल्पोपासकशरीरान्तर्वर्तिहृदयगुहाद्रिस्थानेष्ववस्थितः परमात्मोपास्य । 'उत्तरत्र त्रिष्वधिकरणेषु विपुलदेशावस्थितः परमात्मोपास्यतया प्रतीयत इति विभाग' इति चिन्तामणि । 'त्रिष्वत्रोपासितृणां निजहृदयगुहास्वन्तरश्चिन्त्य उक्तो विश्वान्तर्यामितादेर्विपुलपरिमितिश्चिन्तनीयस्त्रयेऽथ । षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतद्ज्ञप्रपञ्चव्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या नमन्ति ॥' इत्यधिकरणसारावल्यां पेटिकयोर्विषयविभागप्रदर्शनम् ॥

अन्तरादित्यान्तरक्षिविद्याविचारकेणान्तराधिकरणेनास्याधिकरणस्य गतार्थतापादिता चन्द्रिकायाम् । सा चापत्तिरावाभ्यामुभाभ्यामपि परिहरणीया । उपकोसलविद्यावाक्ये 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यन्तः शब्दो न पठ्यते, यथान्तरक्षिविद्यावाक्य इति वैषम्यप्रदर्शने, उच्यते तैः 'अन्तरक्षिणि' इत्यन्तःशब्दघटित एव श्रुतिपाठः श्रीमन्मध्वसम्प्रदाय इति । अत्र सनाधिः सुवच 'अत एव च स ब्रह्म' इति सूत्रेण यस्य प्रक्षिप्ततां मन्यन्ते भवन्तः ।

"य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति' इत्यात्मश्रुत्यादीनामितिशब्दशिरस्कत्वेन मनो ब्रह्मेतीत्यादिवदतस्मिंस्तद्रूपप्रत्ययपरत्वावगमाद्वचनबलाद्वैवाहिकवधूदर्शनेनाभ्युदयवत्पुष्करपलाशवाक्यावगतफलस्य, अब्रह्मविषययाऽपि प्रतिबिम्बोपासनयार्चिरादिवाक्यावगतफलस्य चोपपत्त' इति दृष्टिविधित्वाश्रयणेन प्रतिबिम्बस्योपास्यत्व समर्थयति पूर्वपक्षी" इत्युक्तं परिमले ॥

“ननु ‘अन्तस्तद्धर्मोपदेशात्’ इत्यनेनैवैतद्गतार्थम् । सन्ति खल्वत्राप्यमृतत्वादयो ब्रह्मधर्माः प्रतिबिम्बजीवदेवतास्वसम्भविनः । तस्माद्ब्रह्मधर्मोपदेश एवैवात्र विवक्षितम् । साक्षाच्च ब्रह्मशब्दोपादानात् । उच्यते— ‘एष दृश्यत इत्येनत्प्रत्यक्षेऽर्थे प्रयुज्यते । परोक्षं ब्रह्म न तथा प्रतिबिम्बे तु युज्यते’ इति भामत्युक्तं पौनरुक्त्यपरिहारं । ‘दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयः’ इति कल्पतरुः । ‘यत आदित्ये प्रतिबिम्बादर्शनेनान्तरादित्यवाक्ये प्रतिबिम्बपूर्वपक्षो न सम्भवति । अन्तरक्षिवाक्येऽपि तत्सत्त्वे स न सम्भवतीति तयोर्देवतापूर्वपक्षः कृतः । अतस्तत्र पूर्वपक्षेऽपि शास्त्रीयं दर्शनमन्वेष्यं जातम् , इह तु प्रतिबिम्बपक्षः सम्भवति । प्रतिबिम्बे सुप्रसिद्धलौकिकदर्शनसत्त्वाच्च । शास्त्रीयपूर्वपक्षेऽपि शास्त्रीयमेव दर्शनमन्वेष्यमिति वैषम्यात्’ इत्यधिकरणयोर्वैषम्यं प्रदर्शितं परिमले ॥

‘यद्वृत्तादयं एषोऽक्षिणि पुरुष इति श्रूयमाणोऽस्तु जीवो यद्वाऽक्ष्णो-र्देवतार्कः प्रतिकृतिरथ वा तत्र दृश्येति चेन्न’ इत्यधिकरणसारावल्यामपरोक्षनिर्देशस्य प्रतिबिम्बे स्वारस्यं पूर्वपक्षबीजत्वेन वर्णितम् ॥

स्वातन्त्र्योत्तंसितासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः
कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात् ।
तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे
सेयं पूर्वापरास्वप्यधिकृतिषु यथासम्भवं नीतिरूह्या ॥

इत्यधिकरणसारावल्यां प्रतिबिम्बस्य फलदत्वासम्भवशङ्का पर्यहियत । ‘सर्वत्र धर्माधर्मेषु श्रुतिस्वातन्त्र्यमेव पुरस्कुर्महे । न पुनः कामपि युक्तिम् । एवमत्रापि मिथ्याभूतः प्रतिबिम्बोऽस्तु । तद्दर्शनमेव फलं यच्छति । यथा मिथ्यात्वेऽपि दर्पणस्थात्मप्रतिबिम्बदर्शनान्मङ्गलावाप्तिरिति सुसङ्गतमेतत् । अफलस्यापि वेद्यत्वमस्तीत्यत्र दृष्टान्तमाह कल्याणेति । न ह्याज्यपण्यस्त्रीकपिलादिकमवलोकयितुः फलं ददाति , अपि तु तत्तदवलोकनमेव’ इति

चिन्तामणिव्याख्या । श्रीमद्दीक्षितैरिदं सर्वमनुसृतमिति स्पष्टम् ॥

'अन्तरादित्यान्तरक्षिवाक्ययोर्न हि छायापुरुष इति पूर्वः पक्षः । आदित्ये प्रतिबिम्बादर्शनात् । अन्तरक्षिवाक्येऽपि तत्स्वरूपे तदसम्भवाच्च । किं तु तत्र देवताविशेष इति पूर्वपक्षः । न लौकिकप्रसिद्धिसम्भवस्तत्र । परमात्मनि देवतायां च शास्त्रप्रसिद्धिरेव इति न्यायरक्षामणिः । अक्ष्यादित्यपुरुषयो रूपैक्य श्रावितं तत्र ॥

दृष्टिविधित्वमभिप्रयते पूर्वपक्षिणा । इति शब्दश्रवणं चात्र दृष्टिविधिपक्षस्योपोद्बलकमित्यभिमानः । 'इतिशब्दस्तत्रैवार्थविवक्षां वारयति यत्र प्रत्ययो विवक्ष्यते । यत्र तूक्तार्थावच्छेदेन वचनसम्बन्धस्तत्र स न तां वारयति, यथा इति ह स्मोपाध्यायः कथयति' इति । इह पुनः 'इति होवाच' इति वचनसम्बन्धः स्पष्टः । 'एतद्ब्रह्म' इत्यत्रापि प्रकृत एव वचनसम्बन्धोऽनुवर्तित इतीतिशब्दबलेन प्रत्यवस्थानं प्रत्युक्तं न्यायरक्षामणौ 'सुखविशिष्टाभिधानादेव च' इति सूत्रेण

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म            यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति प्रक्रान्तसुखविशिष्टब्रह्मणो विद्यायाः, अग्निविद्यया वा 'आचार्यस्तु ते गतिं वक्ता' इति प्रदर्शितवक्तृभेदेन वा न विच्छेदः ; किं तु प्रकृतस्य ब्रह्मण एवानुवृत्तिरिति प्रदर्श्यते ॥

तदुपरि शङ्कोत्तिष्ठति " कं ब्रह्म, खं ब्रह्म' इत्यत्रापि दृष्टिविधित्वमस्तु ब्रह्मशब्दस्य द्विरावृत्तेः, अन्ते च 'प्राणं च तदाकाशं चोचुः' इति प्राणाकाशयोरेव कथितत्वेनोपसंहारात्, तद्वाक्ये ब्रह्मशब्दस्यापठनाच्च" इति । 'यावता कं ब्रह्म खं ब्रह्मेति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति—नाम ब्रह्म, मनो ब्रह्मेत्यादिवचनसारूप्यादिति शङ्का प्रत्युच्यते 'अत एव च स ब्रह्म' इति सूत्रेण । "यद्वाव कं तदेव खम्' इत्यादावन्योन्यदृष्टिविधिरेवास्तु । नान्योन्यव्यवच्छेदकत्वम् । व्यवच्छेद-

कत्वे वा कथं भूतशब्दाभिधेयस्याकाशस्य परब्रह्मत्वमिति शङ्काद्वयम्" इति श्रुतप्रकाशिका । "न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम्, मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवात्रोपास्यत्वेनोपदिष्टम् । तत्र प्रसिद्धैः प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा, प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति 'विजानाम्यहं यत्प्राणो ब्रह्मे'त्युक्तवान् । तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यतया विशेषणत्वम्? उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दब्रह्मस्वरूपसमर्पणपरत्वेन वा? प्रथमे पृथग्भूतयोर्वैषयिकसुखाकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात् । अन्यतरप्रकारनिर्दिधारयिषया कं च तु खं च न विजानामीत्युक्तवान् । उपकोसलचेममाशयं जानन्तोऽग्नयो यद्वाव कमित्याद्यूचिरे । ब्रह्मणः सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म, तदेवापरिच्छिन्नसुखरूपं चेति निगमितं प्राणं च हास्मै तदाकाशं चोचु" इति श्रीभाष्यम् ।

एतत्सूत्राभावे पूर्वपक्ष्युपन्यस्तदृष्टिविधिशङ्कानिरासो न सुलभः । भवद्भाष्ये दृष्टिविधिपूर्वपक्षशङ्कानिरासो न वर्णितः केनापि सूत्रेण । इदं सूत्रं श्रीकण्ठभाष्येऽपि पठ्यते । व्याख्यातं च विस्तरेण शिवार्कमणिदीपिकायाम् । प्राचीनवृत्तिकारपाठ एवादृतो भवेच्छ्रीभाष्यकारैः । नानेन सूत्रेण कल्पितेन कोऽपि विशेषलाभोऽस्मन्मतस्य । साम्प्रदायिकत्वादेवेदं सूत्रं पठितं भवेत् । श्रीभाष्यकारेभ्यः प्राचीनैर्यादवप्रकाशैः पठितमिदं सूत्रम्; व्याख्यातं च । एतस्य सूत्रस्य श्रीभाष्यकारकल्पितत्वेन भवन्मिथ्यादूषणं भवता मृषावादित्वमेव सत्यापयेत् । रेखामात्रमपि क्षुण्णात्प्राचीनसम्प्रदायवर्त्मनो न व्यतीयुरस्मद्भाष्यकाराः । नैतस्य सूत्रस्य कस्मिन्नपि मते पक्षपातिता ।

यद्वद्भाषितमेतत्सूत्रे श्रीभाष्ये तत्सर्वं गदित प्रायेण तच्छब्दैरेव न्याय-रक्षामणौ सुखविशिष्टसूत्रे । तत्सूत्रे दृष्टिविधिशङ्कापरिहारौ न प्रदर्शितौ भवदीयभाष्यादिषु । अगतिकतया तच्छङ्कापरिहारौ प्रदर्शितौ तत्सूत्रे श्रीमद्दीक्षितै । महता क्लेशेन सुखविशिष्टसूत्रे तद्योजयितु प्रयतित तैः 'दृष्टिविधिपरत्वशङ्कानिरासार्थत्वेन योजनाया सूत्रस्यायमर्थ — क ब्रह्मेति वाक्यनिर्दिष्ट परमात्मा तु ब्रह्मदृष्टिविशिष्टवैषयिक सुखम् । सुखविशिष्टा-भिधानादेव, सुखेषु यद्विशिष्टमनवच्छिन्न सुख तस्य शब्देनाभिधाना-दित्यर्थ । तथा ख ब्रह्मेति वाक्यनिर्दिष्टश्च परमात्मा न तु ब्रह्मदृष्टि-विशिष्टो भूताकाश । सुखविशिष्टाभिधानादेव । शोभन सुखात्मक यत्ख तस्य खशब्देनाभिधानादित्यर्थ । न चोभयत्रापि हेत्वसिद्धि । 'क ब्रह्म' इत्यत्र कशब्दस्य "यद्वाव क तदेव खम्' इति खशब्दोक्तानवच्छिन्नत्व-विशेषितसुखपरत्वात् । 'ख ब्रह्म' इत्यत्र खशब्दस्य 'यदेव क तदेव खम्' इति खशब्दोक्तसुखविशेषितत्वानवच्छिन्नस्वरूपत्वात्" इति । एतत्सूत्र-स्यापठनात्तावान् क्लेश ।

स इत्याकाशपरामर्श । 'प्राण च तदाकाशं च' इति श्रुतौ प्राणशब्दवदाकाशशब्दोऽपि पुलिङ्ग । आकाशशब्दोक्त ब्रह्मैव । ना-काशो ब्रह्मणो भिन्न , यतस्तस्मिन् ब्रह्मदृष्टिविधिशङ्का भवेत् । सुखविशि-ष्टाभिधानादेव स आकाशो ब्रह्मैव । 'अत एव च स ब्रह्म' 'सुखविशिष्टा-भिधानादेव च सुखशब्दो ब्रह्मपर इति किमनतिरिक्तार्थसूत्रान्तरकरणेन परेषामिति चेत् भाष्यकारपदवीमिव सूत्रकारपदवीमप्यारोढुमिति गृहाण' इति भवद्दूषण मिथ्यैव । नेद सूत्रमिदप्रथमतया पठित श्रीभाष्यकारैः । असत्सूत्रार्थश्च मिथ्यानूदितो भवद्भि । एतत्सूत्रस्यावश्यकता चोपपादितैव।

उपपत्तिरूपहेत्वर्थनिरूपणायोदाहृतो 'तद्यद्यप्यस्मिन् सर्पिर्वा उदकं वा सिञ्चति वर्त्मनीश्चैव गच्छति' इत्यर्थवादो भवद्भाष्ये ।

'स्थानिप्रभावादस्मिन्नक्षिणि यद्यपि सर्पिर्वोदकं वा सिञ्चेत्तद्वर्त्मनी तत् पार्श्वद्वयमेव हि गच्छति । न तत्तत्र लिप्यते—' इति व्याख्यातोऽयमर्थवादः श्रीरङ्गरामानुजमुनिभिरुपनिषद्भाष्ये । निर्लेपभगवदवस्थितिप्रयुक्तं स्थानस्य निर्लेपत्वमिति स्तुतिः क्रियतेऽर्थवादेन । तत्र न हेतुर्वा व्याप्तिर्वाभिप्रेयते । भवदीयोपनिषद्भाष्येऽपीत्थमेव भाषितम् । 'अस्य ब्रह्मणोऽक्षिपुरुषस्य माहात्म्यम् । स्थानस्याप्येतन्माहात्म्यम् । किं पुनः स्थानिनोऽक्षिपुरुषस्य निरञ्जनत्वं वक्तव्यमित्यभिप्राय' इति तत्र भाषितम् । 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' इत्याचार्यवाक्येनोपक्रमे फलकीर्तनस्य संभवः प्रदर्श्यतेऽर्थवादेनानेन । स्थानिसन्निधानमात्रेणाचेतनस्य स्थानस्येदृशो महिमा । ईदृशं स्वारस्यप्रदर्शनमस्मदभिमतमेव । हेतुप्रदर्शने सत्प्रतिपक्षत्वस्वरूपासिद्ध्यापत्तेर्हेतुत्वभाषणमात्रमाक्षिप्तम् । सर्वलेपराहित्यं श्रुत्यनुक्तम् । सर्वथा निर्लेपत्वस्य हेतूकरणे स्वरूपासिद्धिः । क्वचिन्निर्लेपत्वस्य हेतूकरणे सत्प्रतिपक्षता ।

अत्रोक्तं भवद्भिः — "अस्तु । कालोपपत्तिः । प्रथमं तावदात्मत्वामृतत्वादीनां तत्र तत्र ब्रह्मणि श्रुतानामत्रापि श्रवणस्य व्याप्तिबलाद्ब्रह्मण्युपपत्तिः । ततश्चानुरूपस्थानकल्पनोपपत्तिः । यथा महार्हमासनमिदं कल्पितमित्युक्ते महाराजायैवेत्येतदुपपद्यते ; तथा निर्लिप्तमिदं स्थानं कल्पितमित्युक्ते निर्लेपायैवेत्युपपन्नम् इति । अन्यथा स्थानेनापि रूषणेन स्थानस्यापि रूषितत्वापत्तेरिति । नन्वेवं सत्यार्थवादिककल्पनानुरूप्येणापि पर एवेति प्रतीयत इत्यर्थे पर्यवस्यति । तत्र काचादिभिः सलेपत्वान्न परस्थानार्हं चक्षुरित्यपि वक्तुं शक्यमिति दूषयति भाष्यं सुदर्शनः । न हि 'अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात्' इत्युक्ते स्वपुरपरिपालनादधूर्जटिरित्यपि वक्तुं शक्यमिति कश्चित्पर्यनुयुङ्क्त इति चेदेवमदर्शनात्स्यात्पर्यनुयोगः." इति ।

भवदुक्ता अभेदरूपकालंकारप्रतिबन्दी न समा । न्यायसूत्रहेतो-र्नालंकारप्रदर्शकत्वं न्याय्यम् । अलंकारप्रदर्शनत्वमात्रविवक्षा चेद्भवद्भाष्यस्य न तत्रास्माकं विरोध । परं तु सौत्रहेतोरर्थत्वेन तदुपन्यासो न समञ्जस इत्येव प्रदर्शितं श्रीमत्सुदर्शनै । उपपत्तिशब्दस्यात्मत्वामृतत्वाभयत्वानां व्याप्तिबलाद्ब्रह्मण्युपपत्तिरित्यर्थ इति भवद्भिरेवात्रोच्यते । तादृशव्याप्तिर्निर्लेपक्षानविषये नास्त्येव । प्रकरणगतेषु कतिषुचिद्व्याप्तत्वम्, कतिषुचिदसार्वत्रिकत्वमिति प्रदर्शनभेदो न न्याय्य ।

सन्दंशन्यायेन भवद्भाष्यस्य हेतुत्वविवक्षा स्पष्टैव । पूर्वं पश्चाच्च व्याप्तिमद्धेतुभाषणात् । 'अन्तरसूत्रे स्ववाक्यस्थहेतुरुक्त' । श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थाशङ्कापरिहारपरं द्वितीयं सूत्रम् । स्ववाक्यस्थशङ्कायां परिहृतायां प्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं चतुर्थं सूत्रम् 'अत एव च स ब्रह्मेति । अत पाश्चात्यवाक्येन साध्योपपादक पञ्चमम् । षष्ठं तु साध्यद्रढिम्ने पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकमिति सूत्रसङ्गतिः" इत्यतिस्वरस सौदर्शन विषयविभागपूर्वकं सूत्रक्रमप्रदर्शनमवधेयम् । प्रथमसूत्रे स्ववाक्यकथितानामात्मत्वामृतत्वाभयत्वानां ब्रह्मण्येव मुख्यया वृत्त्योपपद्यमानत्व हेतूकृतमिति भाष्यद्वयेऽपि समानम् । उपपत्तिरित्याञ्जस्येन मुख्यवृत्तत्वमुच्यते । प्रतिपन्नार्थानुपपत्तिमूला खलु लक्षणावृत्तिः । तन्निरासो द्योत्यते उपपत्तिशब्देन । द्वितीयसूत्रगतव्यपदेशशब्देन चक्षुरवस्थितपुरुषस्य ब्रह्मत्व श्रुत्यन्तरप्रसिद्धमिति श्रुत्यन्तरपरामर्श क्रियत इति वयम् । लौकिकप्रसिद्धिरुदाहृता पूर्वपक्षिणा प्रतिबिम्बविषये । य एष इति श्रुत्यवगतप्रसिद्धेर्ब्रह्मण्यनुपपत्तिरिति हेतुरुपन्यस्त पूर्वपक्षिणेति भवदीयग्रन्थसंमतम् । 'तस्य दृश्यमानत्वप्रसिद्धे' इति भवद्भाष्यम् । 'परोक्षं ब्रह्म न तथा प्रतिबिम्बे तु युज्यते' इति पूर्वोदाहृताभामतीकारिका । 'दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयः' इति कल्पतरु । 'प्रसिद्धेरुपपत्तेः' केनचित्सूत्रेण शास्त्रप्रसिद्धि-

प्रदर्शनेन समर्थनीया । शास्त्रप्रसिद्धिश्च प्रसिद्धिद्योतकश्रुत्यन्तरव्यपदेश-हेतुना प्रदर्श्यते सूत्रेण । अन्तर्यामिब्राह्मणे चक्षुष्यवस्थान नियमनादिकं च ब्रह्मणि श्रूयते । तच्छ्रुत्युदाहरणेनात्र पूर्वपक्ष्युपन्यस्तप्रसिद्धवन्निर्देशो ब्रह्मण्युपपन्न इत्युपपत्ति साधयति द्वितीय सूत्रम । अत्रान्तर्यामिब्राह्मण-गतचक्षुर्वाक्य व्यपदेशशब्देन परामृष्ट सूत्रकृतेति भाष्यद्वयेऽपि समानम् । तद्वाक्याच्चक्षुष्यवस्थानस्य ब्रह्मणि प्रसिद्धेर्लाभ इति न शक्यापह्नवम् । तत्र 'चक्षुषि तिष्ठन्' इति 'स्थिति' 'अवस्थान' श्रूयते । नियमना-धारकत्वादिकं च श्रूयते । सौत्रस्थानशब्देन तिष्ठन्निति तच्छ्रुत्युक्ततिष्ठ-तिरूपस्थितिपरामर्श स्वरसः । स्थानव्यपदेशशब्दाभ्यां तच्छ्रुतिपरामर्शस्य-समतत्वात् । आदिपदेन तच्छ्रुत्युक्तस्थानरूपक्रियासहपठितनियमनादेर्ग्रहण स्वरसम् । आकाङ्क्षायास्तच्छ्रुत्यैव पूरणस्य सपूर्णलाभात्, श्रुत्यन्तराकाङ्क्षाया अभावाच्च । न चक्षुषि स्थितिमात्र ब्रह्मत्वमुपपादयेत् । छायापुरुषस्यापि स्थितेः कथंचित्समानत्वात् । नियन्तृत्वस्य ब्रह्मगमकत्व स्पष्टम् । अत एव तदप्युप-न्यस्यते सूत्रकृता आदिपदेन । स्थितियमनाभ्यां चक्षुरन्तरस्य ब्रह्मत्वस्य दृढप्रतिपत्तिः । 'अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्येत' इति स्थान-सूत्रस्य ब्रह्मण्युपपत्तिवर्णनपरत्व भाषित श्रीभाष्ये । ब्रह्मण्यनुपपन्नत्वेनोपन्य-स्तस्य प्रसिद्धवन्निर्देशस्यैतत्सूत्रान्निरासलाभः । शास्त्रीयपरोक्षप्रसिद्धिरप्यप-रोक्षदशामापद्यते योगिनामिति प्रदर्शनमपि कृत श्रीभाष्ये । "शास्त्रप्रति-पन्नं हि तत्त्वं योगिभिरुपास्यम् ; दृश्य च । यत्तदद्रेश्यमित्युक्त्वा 'परि-पश्यन्ति धीराः' इत्युक्तम् । गूढोऽस्मा न प्रकाशते । 'दृश्यतेत्वग्रयया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इत्युक्तेश्च" इति श्रुतप्रकाशिका ॥

भवदीयार्थं विमृशामः । स्थानव्यपदेशेनान्तर्यामिब्राह्मणमेव परा-मृश्यते । 'स्थानिनो हि स्थानं महद्दृष्टम् ; यथा यादसामब्धिः । तत्कथ-मत्यल्पं चक्षुरधिष्ठान परमात्मनः परममहत इति शङ्कार्थ' इति भामती ।

'कथं पुनराकाशवत्सर्वगतस्य ब्रह्मणोऽक्ष्यल्पस्थानमुपपद्यते' इति भाष्यप्रथम-वाक्यम् । इदं चाक्षिस्थानस्य ब्रह्मण्युपपत्तिप्रतिपादनमेव सूत्रकृत्यमिति गमयति । उपपत्तिप्रतिपादनेऽनुपपत्तिपरिहारोऽपि गर्भित एव । स्थानादी-नामनेकेषामनुपपन्नानामनुपपन्नानेकस्थानाना च प्रदर्शनेनानुपपत्तिपरिहारं वर्णयति सूत्रकृदिति भवन्त. । 'भवेदेषाऽनवक्लृप्तिः, यद्येतदेवैकं स्था-नमस्य निर्दिष्टं भवेत् । सन्ति ह्यन्यानि पृथिव्यादीनि स्थानान्यस्य निर्दि-ष्टानि । य· पृथिव्यां तिष्ठन्नित्यादिना' इति भाषितम् । स्थानशब्देन स्थानानेकत्वोक्तिर्नातिस्वरसा ; अस्पष्टा च । आदिपदेन स्थानानेकत्व-द्योतनं दुर्वचम् । आदिशब्देन प्रदर्शितानेकस्थानव्यपदेशवच्छ्रुत्युक्तनिय-मनादिभिः पूरणस्वारस्यपरित्यागः । अर्भकौकस्त्वसूत्रेणेदानीमेवाल्पस्थान-शङ्कापरिहारः स्पष्टं सूत्रितः । तच्छङ्काया· पुनरुत्थाने तत्सूत्रस्यैव स्मारणं युक्तम् ; यथा—'अल्पश्रुतेरिति चेत्तदुक्तम्' इति दहराधिकरणे । शास्त्र-प्रसिद्धिरूपसिद्धान्तयुक्तेरेतत्सूत्रेणैवोक्तिः सम्पाद्या । नान्यस्मिन् सूत्रे तदु-पन्यासो दृश्यते । अस्य सूत्रस्य तद्वाचकत्वं दुरपह्नवम् । अन्तर्यामि-ब्राह्मणमेव चक्षुराद्यवस्थितस्य ब्रह्मत्वप्रसिद्ध्यै उपजीव्यम् । तदेवोपजी-व्यतेऽत्र भवदीयैर्ब्रह्मणोऽनेकस्थानप्रदर्शनाय । अनन्तराधिकरणे साधयि-ष्यमाणं ब्रह्मपरत्वं सिद्धवत्कृत्यात्र तच्छ्रुतिपरामर्श इति तुल्यं भाष्यद्वयेऽपि । अन्तरधिकरणे आदित्यचक्षुरन्तरस्थ पुरुषस्य जीवादन्यत्वमुक्तम् 'भेदव्यपदे-शाच्चान्यः' इत्यन्तर्यामिब्राह्मणगैतद्वाक्यप्रदर्शनेनैवेति भाष्यद्वयेऽपि सम्म-तम् । अतस्तद्ब्राह्मणस्याद्यापि ब्रह्मपरत्वानिर्णय इति भवद्दूषणं निरस्तम् । प्रथमपादेऽपि तदेवोपजीव्यते सूत्रकृता आदित्यस्थत्वस्य ब्रह्मपरत्वे श्रुतिप्रसि-द्धिप्रदर्शनाय । अत्रान्तरादित्यादिवाक्यस्योपन्यासो न चतुरः । अन्त-र्यामिब्राह्मणोपजीवकं तद्वाक्यं स्वार्थनिर्णयाय । ततोऽप्युपजीव्यवाक्योप-न्यासश्चतुरतरः । एतत्सूत्रं चानन्तराधिकरणावतारकं भवत्याक्षेपसङ्गत्या ।

'प्रयुक्तेऽर्थेऽसिद्धिशङ्कापरिहारो हि यौक्तिकशैली' इति श्रुतप्रकाशिका ।
'अन्त्यसूत्र 'अनवस्थितेः' इतीतरस्यावस्थित्यभाव उक्तः । स्थितिव्यतिरेकस्य हेतूकरिष्यमाणत्वात्तदन्वयोऽत्र हेतूकर्तुमुचित इति श्रुतप्रकाशिकाभावः' इति भावप्रकाशिका । 'अनवस्थितेः' इति पदस्य नियमेनावस्थानाभाव इत्यर्थः । 'नित्यावस्थानाभाव' इति भवद्भाष्यम् । अवस्थितिशब्दस्यावस्थानमर्थस्तस्मिन् सूत्रे । नियमेनावस्थानाभावस्तत्र हेतुः । ब्रह्मणो नियमेनावस्थानं नियमनं चास्ति । 'स्थानमित्युक्ते प्रथममाधार एव बुद्धिमधिरोहति' इति भवदुक्तिः । शङ्कानुरोधेन सूत्रार्थो वर्णनीयः । अल्पस्थानशङ्कायाः प्रथमाधिकरण एव परिहृतत्वात्तन्निरासाकाङ्क्षैव नास्ति । प्रसिद्धवन्निर्देशस्योपपत्तिप्रदर्शनाकांक्षाऽस्ति । परामृष्टश्रुतौ 'तिष्ठन्नि'त्यभ्यस्यते । अतो नाधारार्थग्रहणं स्वरसम् । 'अनवस्थितेरिति स्थित्यानियमो हि हेतूकरिष्यते । तत्र तत्प्रतियोगिप्रापकं स्थानपदमित्युक्ती रभसात्' इति भवदुक्ती रभसोक्तिरेव । अवस्थितिशब्दस्यावस्थानमेव वाच्यार्थः । नञोऽभावबोधकत्वमेव । नियमेनानवस्थानादित्यौचित्यानुरोधेनार्थः । अन्तर्यामिश्रुतौ 'तिष्ठन् यमयति' इति लट् सार्वकालिकः । स्थितिरपि सार्वकालिक्येव । अन्वयेऽपि नियमेन स्थितिरेव तात्पर्यतोऽवगम्यते । 'चक्षुषि तिष्ठन्नित्यत्राधारस्यैव प्रथमतः श्रवणाच्छ्रुत्यन्तरमपि नानुकूलम् । नियमनमप्युत्तराधिकरणसाध्यमिति न तद्बलादपीष्टसिद्धिः । न च सिद्धवद्धेतूकरणमिति वाच्यम् । तदपेक्षया साधितस्य हेतुत्वसम्भवे तस्यैव युक्ततरत्वात् ।' इति भवदुक्तिः । यद्यपि चक्षुरादि प्रथमपठितं स्थितिक्रियान्वयित्वेन तत्पठितम् । स्थितिनियमनोदेरव प्राधान्यम् । स्थाधातुः श्रुतौ सूत्रे च गृह्यते । तेन तिष्ठतेः परामर्शः स्वरसः । अन्तर्यामिब्राह्मणस्य ब्रह्मपरत्वस्य सिद्धवद्धेतूकरणं भवतामपि समानमेव । न साधितस्य हेतूकरणं भवन्मतेऽपि ॥

श्रुतोपनिषत्कानामर्चिरादिगत्या ब्रह्मप्राप्तिः प्रसिद्धेति सूत्रकारस्य भाव. स्पष्टमवगम्यते श्रुतोपनिषत्कसूत्रात् । 'यत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' 'जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययावर्तते पुन.' इति गीतावचनाभ्या ब्रह्मविदामर्चिरादिगतिरनावृत्तिफलहेतुत्वेनोच्यते । 'अनियमः सर्वासामविरोध. शब्दानुमानाभ्याम्' इति सूत्रेण सर्वासु विद्यास्वविशेषेण गत्यन्वयः सूच्यते । सगुणविद्यामात्रविषयत्वेन सर्वशब्दसङ्कोच. क्रियते भवद्भिः । 'अर्चिरादिना तत्प्रथितेः' इति सूत्रकारेण तन्मार्गस्य मुमुक्षुसामान्यविषये प्रसिद्धिरुक्ता । 'सर्वो ब्रह्मप्रेप्सुरार्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे । कुतः ? तत्प्रथितेः । प्रथितो ह्येष मार्गः सर्वेषां विदुषाम् ।' इति तत्सूत्रे सूत्रस्वारस्यापहृतत्वादवशेन तन्मार्गस्य सर्वविद्यासाधारणत्वमभाषि भगवत्पादैः । पञ्चाग्निविद्यानिष्ठस्यापि श्रुतोपनिषत्कत्वमेवैतत्सूत्रेणावगम्यते । इतरथा सौत्रहेतोस्तत्र व्यभिचारः स्यात् । अप्रतीकोपासक एव पञ्चाग्निविद्यानिष्ठः । भवन्मतोक्तं तस्याब्रह्मवित्त्वमेतत्सूत्रविरुद्धम् । 'ब्रह्मविदां निर्गुणनिष्ठानां गत्यभावः' इति मतमप्येतत्सूत्रविरुद्धम् अनियमसूत्रविरुद्धम्, अर्चिरादिसूत्रविरुद्धम्, अप्रतीकालम्बनसूत्रविरुद्धं च । तद्धि ब्रह्मविद्विषयया प्रसिद्ध्या गत्याक्षिस्थानस्य ब्रह्मत्वं निश्चीयत इत्येतत्सूत्रनिगमनभाष्यमप्यस्य सूत्रस्य सर्वब्रह्मविद्याव्याप्तहेतुप्रदर्शकत्वमभ्युपगच्छति ।

'सुखविशिष्टाभिधानादेव च' इति यत्रामृतत्वाभयत्वादिकं श्रूयते तत्रैव परस्य ब्रह्मण सुखवैशिष्ट्य स्पष्टलिङ्गत्वेन सूच्यते । अत्र सुखस्य विशेषणविशेष्यभाववर्णनेन सुखविशिष्टस्य ब्रह्मण., ब्रह्मणः सुखगुणस्य चोपास्यत्वं भवदीयोपनिषद्भाष्ये स्पष्टं भाषितम् । 'इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वमिति' भाषितं सूत्रभाष्ये । अस्य पादस्य गुणविशिष्टब्रह्मोपास्यत्वाभिधानपरतानेन सूत्रेण बोध्यते' इति भवन्तः । सप्ताधिकरणानि भव-

तामस्मिन् पादे । अत्तृगुहादृश्यत्वाधिकरणविषयवाक्यानि निर्गुणपराणि भवन्मते । अधिकरणत्रयस्य निर्गुणवाक्यपरत्वे 'विशिष्टाभिधानादेव च' इतीतरव्यवच्छेदकावधारणेन सह विशिष्टपरत्वस्य पादोपाधित्वेनाभिधानं कथं संगच्छेत ? विशिष्टाभिधानमित्यस्मन्मतस्यैवाभिधानमेव भवतीति भवद्रीत्यनुसारेण वक्तुं शक्यम् ।

प्रथमाधिकरणविषयभूते शाण्डिल्यवाक्ये 'इतः प्रेत्यैत संभवितास्मि' इत्यस्माच्छरीरादुत्थानमुक्तम् । अत्राधिकरणे कठवल्ल्याम् 'तथोर्ध्वमायन्नमृतत्वमेति' इति मूर्धन्यया नाड्या निष्क्रान्तिरुक्ता । अत्रार्चिरादिगतिरुच्यते ।

---

## अन्तर्याम्यधिकरणम् ॥

'स्थानादिव्यपदेशाच्च' इति पूर्वाधिकरणसूत्रेऽन्तर्यामिब्राह्मणस्य ब्रह्मपरत्वं सिद्धवत्कृतम् । तदत्राक्षिप्य स्थाप्यत इति सङ्गतिर्मतद्वयेऽपि समाना । काण्वमाध्यंदिनशाखाद्वयपठितमन्तर्यामिब्राह्मणमत्र विषयवाक्यमित्युभयसमतम् । 'उभयेऽपि हि' इति सूत्रेणोभयशाखाग्रहणं स्पष्टम् । अस्मिन्नधिकरणे शाखाद्वयमपि सूत्रकृद्बुद्धिस्थमिति स्पष्टम् । यद्यपि प्रथमसूत्रपाठो भिद्यते संप्रदाययोः; न तावता कोऽप्यर्थभेदो भाष्यद्वयेऽपि । 'अधिदैवादिषु' इति भवत्पाठे आदिशब्देन माध्यंदिनमात्रपठिता अधिलोकाधिवेदाधियज्ञपर्याया अपि ग्रहीतव्या इति व्याख्यायते भवद्भाष्ये । भवत्सूत्रपाठो न दूषितोऽस्मद्भाष्ये श्रुतप्रकाशिकायां वा । यथासम्प्रदाय पाठो भवतु । श्रीकण्ठभाष्येऽस्मत्पाठो दृश्यते । अधिलोकेति माध्यंदिनीयशाखापठिताधिकपर्यायस्पष्टग्राहकेऽस्मत्पाठे स्वारस्यमात्रं प्रदर्शितं श्रीभाष्ये । 'अत्राधिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामी श्रूयते' इति भवदीयभाष्यं शाखाद्वयसंग्राहकम् ॥

प्रथमपादेन ब्रह्मणः प्रसिद्धिं प्रसाध्य, अस्मिन् पादे विश्वस्य ब्रह्म-

शरीरत्वबोधकानि वाक्यानि चिन्त्यन्ते । प्रतितन्त्रसिद्धान्तभूतशरीरशरीरि-भावसूचकशारीरकनामकरणं कृतमस्य शास्त्रस्य सूत्रकृता । भेदाभेदश्रुति-घटकत्वेन स एव सम्बन्धः सिद्धान्त्यते अंशाधिकरणेऽहिकुण्डलाधिकरणे च । शरीरशरीरिभावबोधिका भेदाभेदश्रुत्योः शास्त्रवस्थापनायिका घटक-श्रुतिः । शाखाद्वयपठितसर्वपर्यायग्रहणमुचितमत्र । 'य इमं च परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इति परमोपक्रमोऽस्य ब्राह्मण-स्य । उपक्रमश्रुतं सर्वान्तर्यामित्वम् 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन शाखाद्वयपठितसर्वपर्यायग्रहणेन सम्यगुपपादितं भवेत् । शाखाद्वयवाक्य-प्रतीकग्रहणस्य विद्यैक्यसाधनं प्रयोजनमिति नैवोक्तं श्रीभाष्ये वा, श्रुत-प्रकाशिकायां वा । शाखाद्वयपठितब्राह्मणयोरेकविषयत्वं सूचितमित्येताव-न्मात्रमुक्तम् । गुणोपसंहारपादे सर्ववेदान्तप्रतिपाद्याद्यधिकरणेषु विद्याभे-दाभेदादिनिर्णयः करिष्यते । शाखान्तराधिकरणन्यायातिदेशेन प्रति-पादयिष्यमाणस्यैकवाक्यत्वस्य सिद्धवत्कारोऽत्र । 'अधिदैवादिषु' इति भवत्पाठेऽप्यादिशब्दस्य ब्राह्मणद्वयपठितशिष्टसर्वपर्यायविवक्षैव प्रदर्शिता भवद्भाष्ये । तेनात्र प्रथमसूत्रेण शाखाद्वयस्यापि ग्रहणकथनं भाष्यद्वयसा-धारणम् । उत्तरत्र निर्णेष्यमाणस्य सिद्धवत्कारेण सूत्रनिबन्धनं सूत्रकार-शैली । एतदधिकरणनिर्णेयमन्तर्यामिणो ब्रह्मविषयत्वं सिद्धवत्कृत्य 'भेद-व्यपदेशाच्चान्यः' इति पूर्वपादीयान्तराधिकरणे, 'स्थानादिव्यपदेशाच्च' इति पूर्वाधिकरणे चासूच्यत । अनियमाधिकरणे साधयिष्यमाणमर्चिरादिगतेः सर्वविद्यासाधारणत्वं सिद्धवत्कृत्य 'श्रुतोपनिषत्कगत्यभिधानाच्च' इति हेतुर-सूत्रि पूर्वाधिकरणे ॥

सर्वान्तर्यामित्वरूपसर्वशरीरित्वे गतिसामान्यं प्रदर्शयितुं 'उभयेऽपि हि' इत्युभयग्रहणमिति भवतोच्यते । शरीरब्रह्मणोर्भेदे गतिसामान्यं यथा तेन सूत्रेण प्रदर्श्यते, तथा ब्रह्मणः सर्वशरीरित्वे गतिसामान्यं प्रदर्शयति

सूत्रकृत्प्रथमसूत्रे शाखाद्वयग्रहणेन । एवं च सर्वश्रुत्यैकरस्यघटकशरीर-शरीरिभावबोधकश्रुत्युपन्यासे परमादरं सूचयति सूत्रकृत् । पूर्वतन्त्रद्वितीयलक्षणचतुर्थपादारम्भ एव शाखान्तराधिकरणन्यायो व्युदपादि । तस्यैवाक्षिप्य स्थापनमुखेनातिदेशः क्रियते सर्ववेदान्तप्रत्ययाधिकरणे । 'ज्योतिषैकेषामसत्यन्ने' इति सूत्रेण च तत्सिद्धवत्कारः स्पष्टः । 'आदौ तेनैव शाखान्तरनयमुदितं चोदनाद्यैरभेदाच्छ्रुत्यैवाक्षिप्य भूयः प्रतिसमधिगतं भेदकान्यार्थतोक्त्या' इत्यधिकरणसारावली सर्ववेदान्तप्रत्ययाधिकरणे । वैश्वानराधिकरणतृतीयसूत्रभामत्याम् 'कर्मवच्च ब्रह्मापि सर्वशाखाप्रत्ययमेकमेव' इत्युच्यते ॥

'उभयसाधारण्येनाधिदैवादिष्वित्येव वक्तव्ये गुणोपसंहारन्यायेन विद्यैक्यमिति मतिर्मा भूदित्येवमर्थमधिकपाठं पपाठेति मतिभेदापत्तेश्च नायं पाठः साधीयान्' इति भवदुक्तिर्न सङ्गता । उभयप्रतीकग्रहणं प्रतिपाद्यविषयैक्यमेव सूचयति । विद्यैक्यस्पष्टसूचनेन विद्याभेदशङ्कोत्थानं भवानेव भाषेत ॥

समन्वयाध्यायेऽस्मिन् भूयोवाक्यसमन्वयमिच्छति सूत्रकृत् । 'अधिदैवादिषु' इत्येतावन्मात्रे उक्ते आदिपदेन स्ववाक्यगतपर्यायान्तरमात्रग्रहणं वा ; शाखान्तरपठितपर्यायाणामपि ग्रहणं वेति शङ्का जायेतेति स्पष्टत्वनिर्बन्धानुसारेण स्पष्टार्थमेवं सूत्रे निबद्धमिति सुवचम् ॥

'त्वत्पक्षे तु विद्यैक्यस्य सूचितत्वादेकत्रोक्त एव न्यायोऽपरत्रापीति वज्रलेपायितमुभयग्रहणवैयर्थ्यमिति' इति तृतीयसूत्रविषये भवदुक्तिरसमीचीना । शाखाद्वयवाक्ययोरेकवाक्यत्वप्रतीतावपि 'य आत्मनि तिष्ठन्' 'यो विज्ञाने तिष्ठन्' इति पर्याययोः स्थानप्रमाणेनैकार्थकत्वमवगमनीयम् । आत्मपदेन, विज्ञानपदेन च शारीरस्य वाच्यत्वं बोधनीयम् । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इत्यत्रात्मशब्दस्य स्वपरत्वमात्मेश्वरमित्यादाविवेति

निरूप्य शङ्कितयोगिसिद्धस्यैव स्वास्मिन्नवस्थानमुक्तं पूर्वपक्षिणा । अन्तर्या-मिणोऽन्य आत्मविज्ञानशब्दवाच्य शारीर इति सूत्रकृतोपदिदिक्षित तद्भेदे गतिसामान्यप्रदर्शनेन । आत्मशब्दस्थाने पठितो विज्ञानशब्दः , विज्ञान-शब्दस्थाने पठित आत्मशब्दश्च शारीरादन्यस्य विवक्षां वारयत ॥

अत्र चतु शिरस्का शङ्का प्रदर्शिता भवद्भाष्ये । द्विशिरस्का सा ऽस्मत्सिद्धान्ते । 'तस्मात्पञ्चशिरा एवात्र विकल्प ; न तु देवताजीवपरै-स्त्रिशिरा , अथ वा षण्मुख ' इति भवन्निगमनं न केवलमस्मन्मताज्ञानम्, किं तु भवन्मताज्ञानमपि कथयति । योगासिद्ध उपचितपुण्य कश्चिच्छा-रीरो वा, परमात्मा वेति शिरोद्वयमेवास्मन्मते । यद्यपि भवद्भाष्ये चतुष्को-टिकत्व प्रदर्शितं शङ्कायाः , तथापि श्रुतप्रकाशिकोक्तदूषणानामसमाधेयता-निश्चयात् 'कौशिककुम्भसम्भवादिवद्योगसिद्ध्यतिशयवान् कश्चिच्छारीरो वा परमात्मा वेति द्विकोटिक एव संशय' इति निर्णीतं न्यायरक्षामणौ । शिरोन्तरयोर्न हृदय भवद्भाष्यकारस्येति च सूचितं तत्र । 'पृथिव्याद्यभि-मानिदेवताविशेषोऽन्तर्यामीति पूर्वपक्षस्तु भाष्ये सम्भवमात्रेण दर्शितो न मुख्य' इति तत्रोक्तम् । भवद्वर्णितस्तङ्कणो वा, अन्यो वा कश्चिद्योगसिद्धो भवतु शङ्कितबह्वन्तर्यामी शारीर । भवद्भाष्यस्यास्मत्प्रदर्शितशिरोद्वय एव हार्दोऽभिप्राय । स्वमतनिष्कर्षमप्यविज्ञायास्मन्मतं वृथा दूषयन्ति भवन्तः । पृथिव्यादित्यादीनां तत्तदभिमानिदेवतावाचकत्वेऽपि तत्तद्देवतायास्तत्तत्पर्या-योक्तमात्रान्तर्यामित्वं स्यात् ; न सर्वान्तर्यामित्वम् ; यच्छ्रूयते परमोप-क्रमे, यदुपपादनाय ब्राह्मण प्रवृत्तम् । अतस्तत्तद्देवतादीनामप्यन्तर्यमनं योगमहिम्ना कस्यचित्सिद्धस्यैव स्यात् । स च सिद्धो देवो वा, अदेवो वा भवेत् । अतो न देवताया पृथक्छङ्क्यत्वावकाशः ॥

भवद्भाष्येऽप्रसिद्धार्थान्तरविषयशङ्काकल्पना न स्वरसा । अत्यन्ता-प्रसिद्धविषयशङ्कैव दुर्निरूपा । न तत्कल्पनायां किमपि प्रयोजन लभ्यते ।

'अहह प्रसिद्धिपराधीने पादे सर्वत्राप्रसिद्धिरेव प्रतिद्वन्द्वीकर्तव्या । तत्र नियम्यैर्ज्ञात एव तान्नियमयतीति लोके राजादि' । अथ त्वदादृशोऽप्रसिद्धः कश्चिदित्येकत्रापि तत्प्रतिलम्भे श्लाघनीयेऽपि कथमेवं विषीदसि प्रद्वेषमात्रेणेति ' इति भवदीय प्रयोजनकथनमुपहास्यमेव । 'सर्वत्राप्रसिद्धिरेव प्रतिद्वन्द्वीकर्तव्या ' इति भवदुक्तेरर्थो न सुबोध' । कस्याप्रसिद्धिरिष्यते । ब्रह्मेतरस्याप्रसिद्धत्वमेकत्रापि वाच्यमिति भवतां मनोरथ इव । प्रसिद्धिपरे कृत्स्ने पादे एकत्र तत्प्रदर्शनेन किं प्रयोजनमिति न ज्ञायते । 'य यन्तार नियाम्यं तत्त्न वेद ' इत्यवेद्यत्वोक्त्याऽप्रसिद्धत्वं विवक्ष्यते श्रुत्येत्युच्यते किं भवता ? यदि दुर्ग्रहत्वाग्राह्यत्वादिकमप्रसिद्धवस्त्वन्तरशङ्कोन्नायकम् , गुहासूत्रे , अदृश्यत्वादिसूत्रे च तच्छङ्का वर्णनीया भवेत् । 'स्वोत्प्रेक्षिताप्रसिद्धार्थान्तरशङ्काया अत्यन्तासाङ्गत्यं पश्यन्तो भवद्भाष्यकारा अनुपदमेव 'अथ वा नानिरूपितमर्थान्तर किंचिदपि शक्यमस्तीत्यभ्युपगन्तुम् ' इति तत्प्रत्याचख्यु । 'संज्ञाया अप्रसिद्धत्वादित्युपक्रममात्रं पूर्वः पक्षः ' इति भामत्यामस्य पूर्वपक्षस्यानुत्थिति' सूचिता ॥

'यत्तु देवताया एव योगसंभवेन ततः पृथग्विफलं योगिकल्पनमिति तस्य तत्क्षण एव सिद्ध प्रतिवक्ता ' इति भवदुक्तिर्न सुबोधा । योगिविशेषपूर्वपक्षोऽस्माकमिष्ट एव ।

'शारीरस्यैव देवतात्वसंभवेन ततः पृथग्विफलं देवताकल्पनमित्यस्यापि तुल्यत्वाच्च ' इति भवदुक्त्या ' अस्मन्मते योगसिद्धशारीरविषयैव शङ्का न केवलशारीरविषयेति भवता न ज्ञातमिति प्रकाश्यते । योगसिद्धस्यापि शारीरत्वाच्छारीरमात्रस्यान्तर्यामिणो भिन्नत्वेन पठनान्न शारीरो योगसिद्धोऽन्तर्यामिब्राह्मणप्रतिपाद्यान्तर्यामी भवितुमर्हति । व्यापकशारीरमात्रनिवृत्त्या व्याप्ययोगिनिवृत्तिः ॥

"सत्यप्यात्मनि तिष्ठन्निति श्रवणे कथं शारीरशङ्का ? न ह्यर्थो-

शमादाय शङ्कते घटेत । स्वान्तर्नियमनमपि न शक्यशङ्कम् । न हि देवदत्तः स्वात्मन्यन्तः प्रविश्य स्व नियमयतीति शङ्कत" इति भवदुक्तिः 'स्वे महिम्नि' 'आत्मेश्वरम्' इति नियन्त्रन्तरराहित्यार्थकत्वे उदाहृताभ्यां श्रुतिभ्यां दत्तोत्तरा ।" "य आत्मनि तिष्ठन्निति चाभेदेऽपि कथंचिद्भेदोपचारात्, स भगवः कस्मिन् प्रतिष्ठितः 'स्वे महिम्नि' इतिवत्" इति पूर्वपक्षभामती च भवदुक्त निरस्यति ॥

अत्रान्तर्यामिणि प्रधानत्वशङ्काया अनवकाश एव । अत्र श्रुतमन्त स्थित्वा नियमनम्, द्रष्टृत्वादिकं च प्रधाने न योजयितु शक्यम् । आत्मशब्दश्चात्र स्पष्ट श्रूयते । ईक्षत्यधिकरणोक्तयुक्तयो नात्र विस्मरणीया. । अशक्यशङ्कस्य प्रधानस्योपन्यासो दृष्टान्तत्वेनैव भवितुमर्हति । भवद्भाष्यप्रदर्शितेषु शङ्काशिरस्सु प्रधानं नान्यतमम् ॥

सुबालोपनिषद्यन्तर्यामिब्राह्मणे नारायणसमाख्या पठिता । तस्माद्बृहदारण्यके अन्तर्यामिब्राह्मणव्याख्यायामन्तर्यामी नारायण इति भाषितम् ॥

'अधिदैवादिष्वन्तर्यामी' इति पक्षनिर्देशः । तेन न देवतापूर्वपक्ष सूत्राभिप्रेत इति स्पष्टम् ॥

---

## अदृश्यत्वाधिकरणम् ॥

---

निर्गुणब्रह्मपरं मुण्डकं भवताम् । परविद्यात्वेन प्रोक्ताया मुण्डकविद्याया सगुणब्रह्मपरत्वं मन्यते सूत्रकृदिति स्पष्टमवगम्यते, सूत्रत्रये गुणधर्मविशेषणभेदव्यपदेशरूपोपन्यासशब्दप्रयोगात्; धर्मादीनां हेतूकरणाच्च। अत्र गुणवैशिष्ट्यबोधने एतावानादरः सूत्रकृतः । सूत्राक्षरेभ्यः सुस्पष्ट प्रतीतं सगुणपरत्वाभिप्रायमपलपितुं यतन्ते भवन्तो विचित्रैरत्यन्तमोघैः स्वाभिमानैकमूलैः सूत्राक्षरस्वारस्यप्रदर्शनोद्यमैः । भवदभिमतस्वारस्यप्रदर्शनानि विमृशामः ।

'अर्थवशादेव बहुव्रीहिग्रहणसंभवे प्रत्ययस्यापि ग्रहणमन्यपदार्थ एव विवक्षित इत्येतमर्थमाविष्करोति । भूयोवचनस्य विशेषार्थत्वात्' इति निर्विशेषपरत्वप्रतिपादनान्वेषणातिरागैकमूला अयुक्तिका भवदुक्तिः । 'अदृश्यत्वादिगुणक' इत्यत्र धर्मिनिर्देशः पूर्वोत्तरपक्षसाधारणः । 'अदृश्यत्वादिगुणकः प्रधानम्' इति पूर्वपक्षिणाके 'अदृश्यत्वादिगुणकः स ब्रह्म' इति सिद्धान्तिनः प्रत्यनुमानम् । ब्रह्मण्यभिमतानि केवलत्वनिर्गुणत्वाद्वितीयत्वादीनि न प्रधानेऽभिमतानि पूर्वपक्षिणः, भवता वा । पूर्वपक्षेऽपि कप्प्रत्ययघटित एव बहुव्रीहिशब्दः पक्षसमर्पकः । 'अदृश्यत्वादिसाधारणधर्मदृष्ट्या संशयमाह' इत्यानन्दगिरिः । 'शेषाद्विभाषा' इति वैकल्पिकः समासान्तकप् । गुणातिरिक्तं गुणविशिष्टं गुणि वस्तु बोध्यतेऽन्यपदार्थबोधकबहुव्रीहिदृढीकरणेन । कप्प्रत्ययेन बहुव्रीहिः स्पष्टीक्रियते । समासान्तरं च व्युदस्यते । बहुव्रीहौ समासघटकविशेषणेषु न तात्पर्यम्; अन्यपदार्थस्य तच्छून्यत्वबोधन एव तात्पर्यमिति को वा शाब्दिको ब्रूयात् । यदि कपा गुणशून्यत्वबोधनमभिप्रैष्यत 'धर्मोक्तेः' इति सर्वज्ञत्वादिगुणानां हेतुत्वप्रदर्शनं नैवाकरिष्यन । अन्यपदार्थस्य प्राधान्यमेवापेक्ष्यते, न वृत्तिघटकपदबोधितार्थशून्यत्वम् । 'सादृश्यार्थो वा प्रत्ययः' इति भवतां सादृश्यार्थवर्णनं भवदिष्टविपरीतमेव सुवीत । 'अदृश्यसदृशः' इत्युक्तिर्दुर्दर्शतामेवावगमयेत् तथा च 'रूपोपन्यासाच्च' इति चरमसूत्रेण प्रदर्शितरूपवत्त्वेनाविरोधः सिद्ध्येत् । दुर्ग्रहत्वादेवाग्राह्यत्वोक्तिरिति सिद्ध्येत् । 'अल्पार्थो वा' इति भवद्भिरुच्यते । 'अल्पे' इति सूत्रस्य 'अल्पत्वविशिष्टे वर्तमानाद्यथा विहितं प्रत्यया स्युः' इति बालमनोरमाव्याख्यानम् । 'अल्पं तैलं तैलकम्' इति कौमुदीदृष्टान्तः । अदृश्यत्वस्याल्पत्वं नैकान्तेनादृश्यमित्येव गमयेत् । 'सादृश्याल्पत्वे च गुणानां व्यावर्तकत्वमेव; न तु रूषकत्वमपि । न हि दिगम्बरः पीताम्बरवद्भूषितो भवतीति' इति भवदु-

क्तिः । 'सादृश्याल्पत्वे च' इत्यर्थद्वयममेलनं क्रियत इव भवद्भिः । अर्थद्वय-समुच्चयाश्रयणेनाल्पसादृश्यवर्णनस्य नानुशासनानुग्रहः, प्रयोगानुग्रहो वा । गुणानां गुणिनो भूषकत्वं प्रसिद्धम् । 'गुणाः पूजास्थानं गुणिषु' 'गुणैर्दास्यमुपागतः' इति दास्यरुच्यौ गुणानां हेतुत्वोक्तिरनुभवरसिकानाम् । 'दिगम्बरः' इति रूपकं दिशो अम्बरत्वेन परिधातुमशक्यत्वाद्विवसनत्वं फलति । न तथेहादृश्यत्वादीनां गुणत्वानुपपत्तिः । आकाशनिष्ठमस्पर्शत्वादिकमाकाशधर्म एव । तथा अदृश्यत्वादिकमपि धर्मतया संभावनीयमेव ॥

'अदृश्यत्वादिगुणः' इत्युक्ते गुणसमुदाय एव गुणी, न गुणगुणिभेदोऽस्तीति कदाचित्प्रतीयेत । तस्मात् भूर्दिति वा कप्प्रत्ययसहितः पाठः । कपा बहुव्रीहिः स्पष्टीक्रियते । अस्ति स्पष्टत्वनिर्बन्धः सूत्रकृतः ॥

'अदृश्यत्वादि' इत्यादिपदेन के गुणा विवक्षिताः । 'अद्रेश्यत्वम्, अग्राह्यत्वम्, अचक्षुश्रोत्रत्वम्, अपाणिपादत्वम्, नित्यत्वम्, विभुत्वम्; सर्वगतत्वम्, सुसूक्ष्मत्वम्, भूतयोनित्वमिति गुणाः पठितास्तन्मन्त्रे । सन्त्यत्र व्यावृत्तिरूपा धर्माः, विधिरूपा धर्माश्च । अविशेषेण सर्वेषां गुणत्वकीर्तनेन सर्वेषां धर्मत्वमुच्यते । 'अद्रेश्यमग्राह्यम् वस्तु विद्यया धीराः परितः सर्वत्र सर्वैः प्रकारैः पश्यन्ति' इति खलु तन्मन्त्रे श्राव्यते । अद्रेश्यमित्युपक्रम्य परिपश्यन्तीत्युपसंह्रियते । तद्रीतिमेवानुसरति चतुरः सूत्रकृत् 'अदृश्यत्वेत्याधिकरणमुपक्रम्य रूपोपन्यासाच्च' इत्युपसंहरणेन । तेनाप्यदृश्यत्वादेर्दुर्दर्शत्वादिकमेवार्थ इति स्पष्टमवगम्यते । दुर्दर्शत्वादयः पर्यवसानतो विधिरूपा गुणा एव । एतत्स्फोरयति सूत्रकृत्सर्वेषां गुणपदेन सङ्ग्रहात् । गुणानां व्यावर्तकत्वं भूषकत्वं चास्ति । ब्रह्मणः सर्वमहिमभिर्भूषणमेवेच्छति सूत्रकृत् । 'विवक्षितगुणोपपत्तेः' इति गुणेषु विवक्षा सूचिता ॥

'अद्रेश्यस्यैव ब्रह्मणः 'यमेवैष वृणुते तेन लभ्यः' इति भगवत्प्रसा-

दलब्धतद्वरणीयताभाग्यवतः पुरुषस्य 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्दक्षिणतश्चोत्तरेण' 'तद्विज्ञानेन परिपश्यन्ति धीरा' आनन्दरूपममृतं यद्विभाति' 'तं सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति' इति सर्वैः प्रकारैः सर्वतः सदाऽनुभाव्यत्वं श्रावयति मुण्डकश्रुतिः ॥

'अपाणिपादम्' इति श्रुतस्यैवाग्निर्मूर्धेति मन्त्रे 'पद्भ्यां पृथिवी' इति पृथिवीपादत्वं श्राव्यते । पद्भ्यामिति प्रथमार्थे तृतीया 'भूः पादौ' इति स्मृतेः । तेनापादमिति पादनिषेधेन लोकानुभवसिद्धपादवत्ता निषिद्ध्यत इति गम्यते । लोकविलक्षणत्रैलोक्यशरीरवत्त्वान्तर्भूतस्य भूमण्डलपादत्वस्य न निषेधः । प्रथमसूत्रपठितस्यादृश्यत्वस्य न मुण्डकोपनिषदुक्तत्रैलोक्यशरीरत्वरूपस्य निषेधकतेति तृतीयसूत्रेण स्पष्टीक्रियते । अदृश्यत्वोक्तिर्न रूपसामान्यनिषेधः ॥

यदि दिगम्बरस्यैव पीताम्बरत्वं श्राव्येत, पीतस्याम्बरस्य माहारजनवासोवल्लोकविलक्षणत्वं ग्राह्यम्, विरोधपरिहाराय ; उभयोः प्रामाण्यस्य रक्षणाय च ॥

गुण्यतेऽभ्यस्यते आम्रेड्यत इति गुणः । गुणैर्गुणी गुणी, गुणीति लोकवेदयोराम्रेड्यते । गुणानां गुणनिका कार्योपासकेन । परविद्यारूपोपासनस्य गुणविशिष्टत्वं बोध्यते मुण्डकश्रुत्या धनूरूपकेन । कथं निर्गुणं धनुराकृष्येत ? 'गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव' इति गुणभूयस्त्वमपीष्येत रञ्जकत्वेनाभिमतेषु वस्तुषु । 'नान्तं गुणानां गच्छन्ति, तेनानन्तोऽयमुच्यते' इति खल्वार्षं निर्वचनमनन्तशब्दस्य । तच्च वचनं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यस्थानन्तशब्दबलेन संसर्गासंसर्गाखण्डार्थवर्णनस्य भञ्जकम् । 'बृहन्तो ह्यस्मिन् गुणाः' इति खलु श्रौतं ब्रह्मशब्दनिर्वचनम् ॥

'व्यपदेशादिति विहायोक्तेरित्युक्त्याऽपि प्रतीत्यर्थमुक्तिरेवेत्यमुमर्थं

स्पष्टयति । व्यपदेशस्तु विशिष्यापदेशात्मा व्यवस्थापयत्येव विशेषमिति' इति भवदुक्तिरचतुरा, स्वव्याघातिनी च । निर्गुणपरत्वेन भवदभिप्रेते 'ईक्षतिकर्माधिकरणे व्यपदेशशब्दः पठ्यते । तेन चोपास्योपासकयोः कर्तृकर्मरूपभेदव्यपदेशाद्भेदयाथार्थ्यं बोधितं स्यात् । एतद्विद्याविषये द्युभ्वाद्यधिकरणे 'भेदव्यपदेशात्' इति सूत्रेण भवदिष्टविपरीतं फलेत् । स्वारस्यप्रदर्शनसम्भ्रमे एतदनन्तरसूत्र एव व्यपदेशादिति पठ्यत इति भवता विस्मृतम् । ध्रुवमतादृष्टत्वादिकं संपन्नं भवतामदृश्यत्वाधिकरणे ॥

अस्ति च स्वारस्यम् 'उक्तेः' इत्युक्तौ । 'तस्मै स होवाच' 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' 'तदेतत्सत्यमृषिरङ्गिराः पुरोवाच' इत्यादिमध्यावसानेषु वचिधातुः प्रायोजि श्रुत्या । श्रुत्यनुगमः क्रियते सूत्रकृता । वचिधातुघटितकृदन्तशब्दप्रयोगेनाक्तांशेष्वतात्पर्यवर्णनेन 'उवाच' 'प्रोवाच' इत्युक्तस्य मुण्डकस्य भवद्वर्णिते नैर्गुण्ये तात्पर्यं लुप्येत । तथा च भवदभिमतनैर्गुण्योक्तिरर्थशून्या भवेत् ॥

धर्मोक्तेरिति हेतुरुपनिबद्धः, न 'तद्धर्मोक्ते' इति । अस्ति तत्र स्वारस्यम् । अत्र मुण्डके ब्रह्मज्ञानसाधनत्वेन श्रद्धया विधिना धर्माणां निष्कामं सम्यगनुष्ठानं निबध्यते प्रथममुण्डकद्वितीयखण्डे । तृतीयमुण्डके च 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति धर्माचरणस्यावश्यकतोच्यते । उपसंहारे च 'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः' इति ब्रह्मविदामपि धर्माचारसाहित्यमुच्यते । निर्गुणत्वेनाभिमतायाः परविद्याया अपि धर्मानुष्ठानसाहित्यकथनं ध्रुवं भवन्मनभञ्जकं । सत्यम्, तपः ; ब्रह्मचर्यम्, विधिना गुरूपसदनम्, आत्मज्ञानां ब्रह्मविदामर्चनम्, अकामत्व, पर्याप्तकामत्वम् ; कृतात्मत्वम्, अत्यर्थप्रियत्वेन भगवद्वरणीयताहेतुभूतगुणविशेषसम्पादनम्, वेदान्तविज्ञानसुनिश्चितार्थत्वम्, सन्यासयोगः ; विशुद्धसत्त्वत्त्वमित्यादयः साधनभूता बहवो धर्मा अत्रोपदिश्यन्ते । सौत्रधर्मशब्देन प्रकरणोक्ता एते

धर्मा अपि जिघृक्षिताः । एते धर्मा न प्रधानज्ञानायापेक्षिताः । एतादृशधर्मोपदेशवेद्यत्वमक्षरस्य ब्रह्मपरत्व एव घटेत । ब्रह्मधर्मोक्तेः, ब्रह्मप्राप्तिसाधनधर्मोक्तेरिति तन्त्रेण बुबोधयिषितम् । अलौकिकश्रेयःसाधनत्वरूपं धर्मलक्षणं सर्वेषामेतेषां साधनानां समानम् । 'यस्याग्निहोत्रमदर्शपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतममासप्तमांस्तस्य लोकान् हिनस्ति ॥' इत्यन्यूनं वैदिकधर्मानुष्ठानं निर्बध्यते ।' 'प्लवा ह्येतेऽदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति' इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा, तपःश्रद्धे ये ह्युपवसन्तीत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य 'परीक्ष्य लोकान्' इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्याचार्योपासनं विधाय' इत्यादिश्रीभाष्यभाषितमत्रावधेयम् । 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय । बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥' इति गीताश्लोक इव श्रुत्युक्तमवरं कर्म फलेच्छाप्रयुक्तं कर्म ॥

आनुश्रविकस्याविशुद्धिक्षयातमकत्वमुक्त्वा तस्य कैवल्यानुपयोगित्वं व्यक्ताव्यक्तज्ञानां विवेकस्यैव कैवल्यायाभ्यसनीयत्वं चोच्यते साङ्ख्यैः । प्रकरणदृष्टधर्मोक्तिरक्षरस्य प्रधानत्वनिरासिका ॥

अक्षरमिति भूतयोनिरिति किमिति लघुतरपक्षग्रहणं न क्रियते ? किमिति 'अदृश्यत्वादिगुणकः' इति गुरुतरपक्षग्रहणं क्रियत इति प्रश्न उद्भाव्यते भवद्भिः । अस्ति तस्य बहुधा प्रयोजनवत्त्वम् । नञिवयुक्तन्यायोऽत्र पूर्वपक्षबीजम् । 'नञुपश्लिष्टा अब्राह्मणादयः शब्दा हि ब्राह्मणादिप्रत्यासन्नसजातीये क्षत्रियादौ वर्तन्ते । अबालाकृशशब्दादयः प्रत्यासन्नावस्थान्तराश्रये तस्मिन्नेव धर्मिणि वर्तन्ते । न तु धर्म्यन्तरे । सन्नि-

कृष्टबोधनस्य न्याय्यत्वात् । एवमदृश्यत्वादिगुणानां धर्मिविशेषाकाङ्क्षायां निषिध्यमानदृश्यत्वस्याचिदाधारत्वेनाचेतने प्रतिपन्ने तस्यैव सूक्ष्मावस्थस्यादृश्यत्वादौ च सम्भवति विजातीयधर्म्यन्तरकल्पने गौरवप्रसङ्गात्' इति न्यायरक्षणामणौ पूर्वपक्षोक्तिः कार्त्स्न्येन श्रुतप्रकाशिकानुसारिणी । अदृश्यत्वशब्दः पूर्वपक्षस्फोरक इति तच्छब्दग्रहणम् । पूर्वाधिकरणे एतन्न्यायप्रवृत्तिं द्रष्टृत्वादेः स्पष्टश्रवणं न्यरौत्सीत् । अत्राक्षरविषये सर्वज्ञत्वादिकं न श्राव्यत इति पूर्वपक्ष्यभिमानः । 'यः सर्वज्ञः सर्ववित्' इति मन्त्रस्य न प्रथमोक्ताक्षरविषयत्वम्, किं तु 'अक्षरात्परतः परो जीवस्तन्मन्त्रविषयः' इति च तदभिमानः । अत्र 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते' इत्यनुवादमेव श्रूयते । यदि तस्य मन्त्रस्य पूर्वोक्ताक्षरविषयत्वमभ्युपगम्येत पूर्वपक्षिणा प्रधानपूर्वपक्षो नैवोदियात् । अदृश्यत्वमन्त्रेण प्रधानम्, सर्वज्ञमन्त्रेण दिव्यो ह्यमूर्तमन्त्रेण च पुरुषश्चोच्यते । अत्र प्रकरणे द्वावपि प्रतिपाद्येते इत्येव वक्तव्यं पूर्वपक्षिणा । न प्रधानमात्रस्य प्रकरणित्वं पूर्वपक्षयितुं शक्येत । उभयोरेव कारणत्वम् । प्रकृतित्वं प्रकृतेः, निमित्तत्वं च सर्वज्ञशब्देनोक्तस्य समष्टिपुरुषस्य । द्वयोरपि प्रकरणित्वोक्त्या पूर्वपक्षावतार इति स्पष्टं सूच्यते सूत्रकृता द्वितीयसूत्रे तयोः समुच्चित्य निरासेन । तद्द्वन्द्वस्य स्पष्टनिरसनं क्रियते तत्सूत्रे । द्वयं प्रकरणित्वेन पूर्वपक्ष्यते सूत्रकारबुद्धेत्यत्र द्वितीयसूत्राक्षराणि स्पष्टलिङ्गम् । द्वितीयसूत्रे व्यावर्त्यविषये द्विवचनं द्वन्द्वैकशेषश्च पठ्येते ॥

'यथोर्णनाभिः सृजते गृह्णते च' इति मन्त्रे प्रदर्शिता दृष्टान्ताश्चेतनाचेतनोभयसाधारणाः । भवद्भाष्येऽपि प्रधानचेतनसमुच्चयविषयः पूर्वपक्षः प्रदर्शितः । 'ननु 'यः सर्वज्ञः सर्ववित्' इत्ययं वाक्यशेषोऽचेतने प्रधाने न सम्भवति । कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति । अत्रोच्यते । यथा तदक्षरमधिगम्यते यत्तदद्रेश्यम्' इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूत-

योनिं श्रावयित्वा पुनरन्ते श्रावयिष्यति 'अक्षरात् परतः पर' इति । 'तत्र य. परोऽक्षराच्छ्रुत' स सर्वज्ञ सर्ववित्सम्भविष्यति । प्रधानमेव त्वक्षर-शब्दनिर्दिष्टं भूतयोनि.' इति भवद्भाष्यम् । अक्षरात्पर. पुरुषः कथमक्ष-रमेव भवेदिति भवद्भाष्याशय. ॥

एतेन 'तेन प्रकृतिपुरुषौ वा प्रकरणप्रतिपाद्यौ, उत परो वा प्रक-रणीति द्विकोटिक एवात्र विकल्प । न तु त्रिकोटिक इति वर्णयति श्रीभाष्यकार । केन हेतुनेति स एव प्रष्टव्यः । न हि तत्र युक्तिं पश्याम' इति भवदुक्तिर्निरस्ता ॥

'भूतयोनि. प्रधानं वा जीवो वा यदि वेश्वरः । आद्यौ पक्षावुपादाननिमित्तत्वाभिधानत' इति भवन्मतेऽधिकरणपूर्वपक्षसग्रहः । 'प्रधान-शरीराविति पूर्व. पक्ष' इति श्रीसदाशिवेन्द्राः । भवदुक्तिर्न केवलमस्मदीयै ; किं तु भवदीयैश्च प्रतिषिध्यते ॥

'न हि सूत्रे प्रकृतित्वपुरुषत्वाभ्यां तावुपात्तौ' इति भवदाक्षेप सुनिरसः । 'अदृश्यत्वादिगुणकशब्देनाक्षरम्, पुल्लिङ्गनिर्देशेनाक्षरात्परतः परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वय विषयतयोपाददानः संशयं दर्शयति' इति श्रुतप्रकाशिका । अद्रेश्यमित्यादिकं क्लीबान्तम् । योनिशब्दस्य स्त्रीलिङ्गत्वेन प्रसिद्धिप्राचुर्यमिति न्यायरक्षामणि । अन्यथाऽपि समादध्महे भवदाक्षेपम् । 'अदृश्यत्वादिगुणक.' इति नञिवयुक्तन्यायस्फोरणेन प्रधानसंशयप्रापकत्वमिष्यते मतद्वयेऽपि । तेनैव न्यायेन 'दिव्यो ह्यमूर्तः' इति मन्त्रेऽमूर्तशब्दस्य ब्रह्मभिन्नपुरुषसंशयप्रापकत्व सुवचम् । 'दिव्योह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यज । अप्राणो ह्यमना शुभ्रोऽक्षरात्परत. परः ॥' इति मन्त्रेऽमूर्तत्वम्, अप्राणत्वम्, अमनस्त्वं च श्रूयते । ब्रह्मभिन्नपुरुषे मूर्तत्वसप्राणत्वादीनां सम्भवात्, नञिवयुक्तन्यायेन तत्सजातीयस्यैव ग्रहणं स्वरसम् । सौत्रादृश्यत्वशब्देनामूर्तत्वमपि ग्रहीतुं

शक्यम् । अद्रेश्यमिति श्रौतशब्दस्वरूपग्रहणं न कृतं सूत्रेण । तदर्थ एव गृहीतोऽदृश्यत्वेति । अर्थग्रहणं चामूर्तस्यापि समानम् । एवं च 'अदृश्यत्वादिगुणकः' इत्यद्रेश्यमन्त्रोक्तभूतयोनेः, अमूर्तमन्त्रोक्तपुरुषस्य च पक्षत्वेन तन्त्रेण ग्रहणम् ॥

'तत्र कथं साङ्ख्यपरिभाषावलम्बनावकाशः ? किं च शास्त्रदृष्ट्या तूपदेशः ; सर्वत्र प्रसिद्धोपदेशादित्युक्त्यनन्तरमपि 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामित्यस्याद्त्तावकाशम्, कथं प्रकरणमेवमन्यपरमिति प्रत्यवस्थातुं शक्यम् , तन्नोपपद्यत एवं प्रक्रियेति' इति भवदाक्षेपोऽज्ञानैकमूलः स्वमतविप्रतिषिद्धः । तत्र तत्र विचारविषये वाक्ये स्वाभिमतस्यैव प्रकरणित्वम् ; पूर्वपक्षे फलं च वक्तव्यं पूर्वपक्षिणा । 'प्रधानशारीरध्यानमत्र पूर्वपक्षे फलम्' इति सदाशिवेन्द्राः ॥

ब्रह्मविद्येति श्रूयत एवात्र । यद्यक्षरं प्रकृतिः, अत्र श्रावितं ब्रह्मापि प्रकृतिर्भविष्यति । 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इत्यत्र श्रूयते । एष च ब्रह्मशब्दो न परमात्मपर इति भवत्सम्मतम् । 'मम योनिर्महद्ब्रह्म' इति गीताश्लोके ब्रह्मशब्दः प्रकृतिवाचक इति भाष्यत्रयसम्प्रतिपन्नम् । अतो न ब्रह्मशब्दश्रवणमात्रात्पूर्वपक्षानुदयः शक्यशङ्कः । एतत्पादस्यायोगव्यवच्छेदपरता वर्ण्यते भवन्मते । ब्रह्मणः कारणत्वमेव नास्ति; प्रधानादेरेव कारणत्वमित्याक्षेप्तव्यं पूर्वपक्षिणा भवन्मते । प्रकरणस्य ब्रह्मभिन्नप्रधानादिपरत्वानिरूपणे कथं भवन्मते पूर्वपक्षसम्भवः ? भवद्भाष्ये आनन्दमयाधिकरणात्प्राक् 'यच्च गतिसामान्यादित्यचेतनकारणनिराकरणमुक्तम् , तदपि वाक्यान्तराणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्मविपरीतकारणनिषेधेन प्रपञ्च्यते' इत्यध्यायशेषकृत्यं भाषितम् । चतुर्थपादारम्भे च 'गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते ; न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन ।... . यदुक्तं प्रधानस्याशब्दत्वम् तदसिद्धम् । कासु

चिच्छाखासु प्रधानसमर्पणाभासाना शब्दानां श्रूयमाणत्वात् । अत प्रधानस्य कारणत्व वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते । अतस्तेषा (शब्दानां) अन्यपरत्वं प्रदर्शयितुं परः सन्दर्भ प्रवर्तते' इति भाषितम् । एतेन पादत्रये ब्रह्मण कारणत्वायोगो वर्ण्यते प्रधानकारणत्ववादिभिस्तन्मतच्छायानुसारिभिर्वा पूर्वपक्षिभि', तुरीये पादे कारणत्वस्य ब्रह्मणोऽन्यत्रापि योगो बर्ण्यते तैरिति भवद्भाष्यकृतां हृदय स्पष्ट भवति । उक्त च ब्रह्मामृतवर्षिण्यां चतुर्थपादारम्भे 'ब्रह्मवत्प्रधानस्यापि जगत्कारणत्वेन वेदान्तबोध्यत्वात् । न च कारणद्वयवैयर्थ्य कल्पभेदेन व्यवस्थानादिति ब्रह्माङ्गीकारेणाक्षेपः' इति । 'प्रसिद्धोपदेशात्' इति द्वितीयपादारम्भ एव ब्रह्मकारणत्वस्य प्रसिद्धत्वेनोक्तत्वात्, तत प्रभृत्यन्ययोगव्यवच्छेदः क्रियत इति वयम् । तन्द्विषयवाक्यमात्रस्य प्रधानादिपरत्व व्रण्यते पूर्वपक्षिणोत्तरत्रिपाद्याम् । 'प्रसिद्धोपदेशात्' इति द्वितीयपादारम्भ एव सूत्र प्रणयस्ततः पूर्वमेव ब्रह्मकारणत्वस्य प्रसिद्धि सपादितेति स्पष्टं सूचयति । तत्सूत्रोपन्यासेन भवद्भि कृतं ब्रह्मकारणत्वप्रसिद्धिप्रदर्शनमस्मन्मतानुकूलम्, भवन्मतभञ्जकं च । 'कथ प्रकरणमेवमन्यपरं प्रत्यवस्थातु शक्यम्' इति भवदाक्षेपो भवन्मतमेव व्याहन्ति । उदाहृतभवद्भाष्यवाक्यं भवदुक्त निरस्यति । न्यायरक्षामणावस्मिन्नाधिकरणे सांख्यमतावलम्बेन पूर्वपक्ष इति सुविशदमुपपादितम् ॥

'अदृश्यत्वेनोक्तस्य प्रधानत्वसमर्थनमुपजीव्याक्षरात्परतः परस्य जीवत्वमाह' इति श्रुतप्रकाशिका । 'यथा अदृश्यत्वेति निषेधस्वारस्यवशेनाचेतनस्यैव द्रव्यस्यावस्थान्तरयुक्तस्य ग्रहणमुच्यते, तथा दिव्यो ह्यमूर्तः पुरुष' इति मन्त्रे जीवे प्रसिद्धस्य मन प्राणवत्त्वस्य निषेधदर्शनात्तस्यैवावस्थान्तरयुक्तस्य ग्रहणमुचितम् । अत. सर्वज्ञत्वादिकमपि जीव एव मुक्तावस्थापेक्षया नेतु शक्यम्' इति श्रुतप्रकाशिकाव्याख्यान भावप्रकाशि-

कायाम् । अत्र प्रधानजवयोर्व्यतिकरेण प्रतिपाद्यत्वमगत्या स्वीकार्यमिति पूर्वपक्षप्रदर्शनं कृत न्यायरक्षामणौ , भावप्रकाशिकायां च 'यस्य येनार्थसम्बन्ध' इति भाट्टन्यायप्रदर्शनेन । 'यत· पुरुषाधिष्ठितप्रधानं प्रसूते, अतश्चेतनाचेतनदृष्टान्ता उपन्यस्यन्त इत्यर्थ । ननु प्रधानजीवावत्र प्रतिपाद्येते इति पूर्वः पक्ष साङ्ख्यमतावलम्बी । साङ्ख्यमते च पुरुषस्य सन्निधानमात्रेणैवोपकर्तृत्वं नाधिष्ठातृत्वेनेत्याशक्य तदनुरूपदृष्टान्तस्यापि सत्त्वात्पुरुषाधिष्ठित प्रधानं परिणमत इति वा ; पुरुषसान्निधानमात्रेण परिणमत इति वा किंचिन्मतमवलम्ब्य पूर्वपक्ष· प्रवर्तितुमर्हति' इति भावप्रकाशिकोक्तमत्रावधेयम् ॥

द्वितीयसूत्रश्रीभाष्यमधिकृत्योच्यते भवद्भि 'उभाभ्यामुभयोरपि व्यावर्तनमिति । कथं नाम यादृशविशेषणविशिष्टतयोच्यमानोऽपि हिरण्यगर्भ इत्युपात्त स कथं विशेषण इति वचनमात्रेण निराक्रियेत ? विजातीया प्रकृति , अक्षराद्भेदव्यपदेशेन वा ततो भिन्नो हिरण्यगर्भश्च' इति । अस्मत्पूर्वपक्षे आशङ्कित· समष्टिपुरुषो जीवजातीय एव , नेश्वरः । सर्वज्ञत्वसर्वविन्त्वादिकमीश्वरस्यैव स्वाभाविको धर्म . । सोपाधिकास्वाभाविकान्यायत्तधर्मापेक्षयातद्भूतानां सर्वज्ञत्वादीनामेव ग्रहण न्याय्यम् । 'न हि शारीरस्योपाधिपरिच्छिन्नदृष्टे. सर्वज्ञत्वम् , सर्वविन्त्व वा सम्भवति' इति भवद्भाष्ये भाषितं पूर्वसूत्रे । 'न ह्येतादृिव्यत्वादिविशेषणमविद्याप्रत्युपस्थापितनामरूपपरिच्छेददाभिमानिनस्तद्धर्मान् स्वात्मनि कल्पयतः शारीरस्योपपद्यते' इति च भाषितमेतत्सूत्रे ॥

द्वितीयसूत्रे हेतुद्वन्द्वस्य प्रत्येकमुभयव्यावर्तकत्वमुपपादित श्रीभाष्यश्रुतप्रकाशिकयो । 'विशिनष्टि हि प्रकरण प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थ. । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः तथा ताभ्यामक्षरस्य भेदश्च व्यपादिश्यतेऽक्षरात्परत. पर इत्यादिना' इति

श्रीभाष्यभाषित सूत्रार्थः । 'विशेषणाच्च' इति गुहासूत्रानन्तरसूत्रस्य प्रकरणेन गन्तृगन्तव्यत्वेन, मन्तृमन्तव्यत्वेनैताविव विशेषितौ न बुद्धिजीवौ इत्यर्थो वर्णितो भवद्भाष्ये । प्रकरणगतविशेषणरूपव्यावर्तनमत्र गृह्यते विशेषणशब्देन । स्वैकविज्ञानेन सर्वविज्ञानसम्पादक वस्तु पृष्टम् । सर्वविद्याप्रतिष्ठेति प्रोच्यमाना ब्रह्मविद्या वर्णिता । निमित्तोपादानभेदो वर्णितः पूर्वपक्षिणा । तदैक्ये एकविज्ञानसर्वविज्ञानसिद्धिः । 'तथाऽक्षरात्सम्भवतीह विश्वम्' इति विश्वशब्दोक्तचेतनाचेतनात्मककृत्स्नजगतो ब्रह्मणः सम्भव उक्तः । अचेतनजगन्मात्रस्य प्रधानात्सम्भवः कथञ्चिदुपपाद्येत पूर्वपक्षिणा पयोऽम्बुवदित्यादिप्रदर्शनेन । चेतनप्रपञ्चस्य तस्मात्सम्भवः पूर्वपक्षिणोऽपि नेष्ट । अपरोक्षतापर्यवसानयुक्तब्रह्मोपासनम्, तदङ्गानि चात्रोपदिश्यन्ते । तच्च शङ्कितोभयव्यावर्तकम् । 'अक्षरात्परतः पर' इति मन्त्र परामृष्ट सौत्रभेदव्यपदेशशब्देनेति भाष्यद्वयसम्मतम् । स च प्रधानपुरुषोभयव्यावर्तनक्षमः । अक्षरशब्देनाव्याकृतग्रहणमिति सम्मतमुभयो । 'तस्मादक्षरात्परो यः समष्टिपुरुषस्तस्मादपि परभूत' इति श्रीभाष्यप्रदर्शितार्थः । 'यत्तु समानविभक्तिनिर्देशस्वारस्यात्सामानाधिकरण्यमिति तन्न । परशब्दस्य पञ्चम्यन्तपदसापेक्षत्वात्तत्स्वारस्यार्थं न सामानाधिकरण्यम्' इत्यस्मद्भाष्यार्थस्य स्वारस्यं प्रदर्शितं श्रुतप्रकाशिकायाम् । भेदव्यपदेशघटितमन्त्रस्थेतरयोर्द्वयोरपि व्यावर्तकत्व सम्भवति तत्त्यागो न न्याय्यः । अधिकस्याधिक फलम् ॥

भवद्भाष्ये तृतीयसूत्रद्वितीययोजनायां भाष्यकृदभिमतायाम् 'अक्षरात्परत्वेनोक्तस्य पुरुषस्य त्रैलोक्यशरीरप्रजापतिपरत्व भाषितम् । तृतीयसूत्रहेतोरुभयव्यावर्तकत्व भाषितं भवद्भाष्ये । तृतीयसूत्रस्थचकारेण द्वितीयसूत्रोक्तहेतुद्वयेन समुच्चयस्याभिप्रेतत्वात्; तृतीयसूत्रोपात्तहेतुवत्तयोरप्युभयव्यावर्तकत्ववर्णन स्वरसम् ॥

'अमूर्त: पुरुष' इति श्रावितस्यामूर्तत्वस्य समष्टिपुरुषव्यावर्तकत्वं स्पष्टम् । 'य सर्वज्ञ' इति मन्त्र 'तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते' इति श्रुतस्य ब्रह्मणः समष्टिपुरुषपरत्वमिच्छाम । तथा च तन्मन्त्रेणोभयव्यावर्तन सुलभम् ॥

'कथमव्यक्तात्पुरुषः पर , पुरुषान्न परं किञ्चिदित्यनेन समानार्थकानामेव .. .... सति प्रयोजनान्तरे व्यावर्तितव्यावर्तनमेव इति' भवदाक्षेप सुनिरस । भवदुदाहृतकठश्रुतावव्यक्तशब्देन न मूलप्रकृतिग्रहणम् ; किं तु शरीरस्येति सूत्रकृन्निर्णीतार्थोऽपि विस्मृतो भवता । 'अक्षरात्परत: पर:' इत्यत्रोक्तमक्षर मूलप्रकृतिपरमिति सर्वपक्षसप्रतिपन्नम् । कठश्रुतौ 'बुद्धेरात्मा महान् पर । महत परमव्यक्तमव्यक्तात्पुरुष पर.' इति बुद्धे: परत्वेनोक्तो महानात्मा जीव इति वयं व्याख्याम: । तत्र वय वशीकार्यपरम्परां वर्णयाम. , न कारणपरम्पराम् ॥

'समासोऽपि लाघवार्यैकेनैव वाक्येनोभावपि व्यावर्तयति श्रुतिरिति सूचनाय । तेन वाक्यान्तरोक्तविशेषणोपादानमपि परकीय पराहतमिति' इति भवदुक्तिः सुनिरसा । मुण्डकप्रकरणमत्र सूत्रकृद्धृद्धिस्थम् , यथा कठवल्लीप्रकरणम् 'विशेषणाच्च' इति सूत्रे । तत्र प्रकरणगतानेकवाक्यैर्विशेषणं परामृश्यत इति सम्प्रतिपन्नम् । अनेकवाक्यगतहेतुबहुत्वं निर्णयदार्ढ्याय भवेत् । द्वितीयसूत्र यथासख्यान्वयो न घटते भवतामित्यस्वारस्यम् ॥

''दिव्यत्वामूर्तत्वपुरुषत्वादयो हि कात्स्न्र्येन प्रधानस्यापि न सम्भवन्ति । 'अक्षरात्परत: पर:' इति जीवव्यावृत्तिरपि हि प्रतीयते , सकारण करणाधिपाधिप इतिवत् । अक्षरात्परो हि जीवः । विशेषणशब्दस्य दिव्यो ह्यमूर्त इति श्लोकार्थमात्रविषयत्वं चायुक्तम् ; सङ्कोचकाभावात् । एकविज्ञानेन सर्वविज्ञानाभिधानादीनां भूतयोन्यक्षरस्य चिदचिद्व्यावृत्तिफ-

लकत्वाद्विशेषणशब्देन वक्तुं युक्तम् । न तु धर्मशब्देन । न ह्येक-विज्ञाने सर्वविज्ञानाभिधानं नाम परमात्मगतो धर्मः । अतस्तादृशं विशेष-णज्ञानं द्वितीयसूत्रेण विवक्षितं भवितुमर्हति' इति श्रुतप्रकाशिका । प्रथ-मसूत्रे एकविज्ञाने सर्वविज्ञानस्य भवद्भाष्योपन्यासोऽनुचित इति भावः ॥

द्वितीयसूत्रविषये उच्यते भवता 'कुतोऽत्र नैकवद्भावो विवक्षितः ? द्वित्वावद्योतनायेति गृहाण । अथापि कुतो न क्लीबान्ततेति चेत्—श्र-वणमात्रेण पुंसः प्रथममुपस्थितये स्यात्' इति । विवक्षितहेतूनां द्विरूपत्व-मस्ति । यथासंख्यप्रतीतेर्बाधितत्वात्, प्रकरणगतहेतूनामुभयव्यावर्तनक्षम-त्वादुभाभ्यामप्युभयव्यावर्तनवर्णनं स्वरसम् । निर्णयप्रकरणवाक्यानुरोधेन खलु सौत्रहेत्वर्थो वर्णनीयः । अत्र प्रधानवाचकशब्दस्य यदि क्लीबान्तत्वम् इतराविति पुंलिङ्गैकशेषरूपं न स्यात् । 'कावितरौ, स्मार्तं च शारी-रश्चेति यौ पूर्वमुपात्तौ' इति भवद्वर्णनं शब्दशास्त्राविरुद्धम् । भूतयोनिरि-ति स्त्रीलिङ्गशब्दस्य, पुरुषशब्दस्य च ग्रहणे पुंलिङ्गैकशेषः सुलभः । श्रु-तिवाक्ये भूतयोनिः प्रथमं प्रदर्शिता । अनन्तरं पुरुषः । श्रुतिवाक्य-प्रदर्शितक्रमानुगमनं न्याय्यं सूत्रस्य । भवद्भाष्यप्रदर्शितपूर्वपक्षे श्रुतिक्रम-एवादृतः । श्रुतपदार्थोपस्थितिक्रमोल्लङ्घनं न न्याय्यम् ॥

एतेन 'किमर्थं यथोपस्थित्युभाभ्यामुभयोर्व्यावर्तनम् ? न तूभाभ्या-मप्युभयोः । ... .. अत एवानपेक्ष्य लाघवं हेतावपि समासकरणम्' इति भवदुक्तिर्गलहस्तिता ॥

'एवं तर्हि कथं सूत्रे चकारः । नायं चकारः साध्यसाधनसङ्कल-नाय प्रयुक्तः, किं तु धर्मोक्त्याऽनयोः समुच्चयार्थम्' इति भवदुक्तिरस-ङ्गता । तृतीयसूत्रस्थचकारेण हेतुत्रयसमुच्चयवर्णनं सुलभम् । 'भूत-योनेः परमात्मत्वे हेतुमाह' इति द्वितीयतृतीयसूत्रद्वयमप्यवतारितमैकरूप्येण स्वतन्त्रहेतुपरत्वेन श्रीमत्सदाशिवेन्द्रैः । भवद्भाष्ये च 'अदृश्यत्वादि-

गुणकः परमेश्वर एव नान्यः' इति प्रथमसूत्रार्थः । 'इतश्च परमेश्वर एव भूतयोनिर्नेतराविति गम्यते' इति तृतीयसूत्रार्थश्च भाषितः । अतस्त्रयाणामपि सूत्राणां परमात्मसाधकत्वम्, शङ्कितोभयाव्यवर्तनं च भाष्यसंमतम् । भवत्पूर्वैरेव भवदुक्तिर्निरस्ता भवति ॥

'ननु विशेषणे प्रधानमपि कुतो न व्यावर्त्येत ? न व्यावर्त्येत । कुतः ? शास्त्रकारानिष्टेः ; नेच्छतो हि शास्त्रकारौ विशेषणेन प्रधानस्यापि व्यावृत्तिं सूत्रभाष्यकारौ श्रुतिमनुरुन्धानौ' इति भवदुक्तिर्विचित्रैकान्ता । भवद्भाष्यस्य शास्त्रत्वेनास्माभिरभ्युपगमे भवद्ग्रन्थस्यानावश्यकतैव । श्रुत्यनुरोधमेव वयं प्रदर्शयामः । सूत्राणां बहुश्रुतिपरामर्शकत्ववर्णनं तेषां विश्वतोमुखत्वमावक्ष्यति ॥

'असम्भवाच्च । न हि विशेषणेन प्रधानस्य व्यावृत्तिः सम्भवति । भिन्नजातीयस्य समानजातीयं हि व्यावर्तयेद्विशेषणम् । न हि नीलमुत्पलमित्युक्ते घटाद्यावृत्तिमभिप्रैति कश्चित् । तथा दिव्यो ह्यमूर्तः पुरुष इत्युक्तेऽपि न कोऽपि प्रधानाद्यावृत्तिमध्यवस्येदिति' इति भवदुक्तिर्न समीचीना । भेदनरूपक्रियोच्यते सौत्रविशेषणशब्देन । विशेषणानां सजातीयमात्रव्यावर्तकत्वमिति भवदुक्तनियमे न किमपि प्रमाणमस्ति । तैत्तिरीयभाष्ये भवद्भाष्यकारप्रदर्शितनियमो न प्रामाणिकः ॥

अस्मद्भाष्यस्वारस्यापहृताः श्रीमद्दीक्षिता हेतुद्वयस्यापि प्रत्येकमुभयव्यावर्तकत्वं वर्णयाबभूवुर्न्यायरक्षामणौ । "सूत्रे इतराविति पूर्वाधिकरणनिर्दिष्टौ स्मार्तशारीरौ परामृश्येते । यद्यपि स्मार्तं प्रधानं सिद्धान्ते नेष्यते ; तथाऽपि तदेव फलतोऽव्याकृतं भविष्यतीति तस्य परामर्शः । यद्यप्येवं सति स्मार्तशारीरनिराकरणपक्षहेत्वोः क्रमेणान्वयार्थम् 'भेदव्यपदेशविशेषणाभ्याम्' इति सूत्रणीयम् ; तथाऽपि हेतुद्वयमप्युभयत्र योजयितुं शक्यमित्येवं सूत्रितम् । अमूर्तत्वादिविशेषणेन हि नञिवयुक्तन्यायेनाव्याकृतव्यावर्तन-

मपि लभ्यते" इति न्यायरक्षामण्युक्तिर्भवदुक्तं सर्वं भवद्भाष्यकारैः सत्यादिवा-
क्यार्थविचारे भाषित नियमं चापुनरङ्कुरमुन्मूलयति ॥

न केवल श्रीमद्दीक्षिता· ; कि तु भामतीकर्तार· श्रीमन्मिश्राश्च
भवदुक्तस्य प्रत्येकमुभयव्यावर्तनप्रतिषेधस्य प्रतिषेद्धार· । विशेषणपदस्य
'शारीराद्विलक्षणत्वेन विशिनष्टि' इति भवद्भाष्यम् । भाष्यस्थशारीरपदस्य
प्रधानस्याप्युपलक्षकत्वं स्पष्टमुक्त भामत्यां 'शारीरादित्युपलक्षणम् । प्रधा-
नादित्यपि द्रष्टव्यम् ।' इति । इत्थं च भवतां स्वगोष्ठीबाह्यत्वमेवापद्यते ॥

'पुरुषशब्दस्य प्रधानव्यावर्तकत्वादाद्यहेतुरपि प्रधानवारणार्थः' इति
कल्पतरुकृता व्याख्या भामतीग्रन्थस्य । तेऽपि भवत्परिपन्थिन· , भवद्भा-
ष्यकारोक्तनियमपरिपन्थिनश्च ॥

किं च 'धर्मोक्ते' इति प्रथमसूत्रहेतुना प्रकरणगता व्यावर्तकविशेष-
रूपधर्मा गृह्यन्ते । द्वितीयसूत्रेऽपि विशेषणरूपधर्मवाचकशब्दग्रहणे पुन-
रुक्तता भवेत् ॥

---

## वैश्वानराधिकरणम् ।

मुण्डकश्रुत्युपन्यस्तत्रैलोक्यशरीरत्व ब्रह्मणोऽन्यत्वेन शक्यशङ्कं वैश्वा-
नरेऽपि श्रूयत इति शङ्कयोत्थानमिति सङ्गतिर्मतद्वयेऽपि समाना । सा च
सङ्गति· 'रूपोपन्यासाच्च' इति सूत्रस्य 'द्यौर्मूर्धा—' इति श्रुतत्रैलोक्यशरीरत्व-
परत्वमेव वृत्तिकारप्रदर्शितं सूत्रकृदभिमतमिति निश्चाययति ॥

'रूपोपन्यासादक्षरं ब्रह्म निर्णीतम् । तादृश रूपं च जाठराग्नाव-
नेकान्तम्' इति श्रीब्रह्मानन्दा· । 'रूपोपन्यासप्रसङ्गात् त्रैलोक्यदेहो
वैश्वानरः स्मृतो विचार्य इति प्रसङ्गात्सङ्गति·' इति श्रीरामानन्दा· । एव
च 'रूपोपन्यासाच्च' इति सूत्रस्य भवद्भाष्यप्रदर्शितद्वितीययोजनाया उत्तरा-
धिकरणेन न सङ्गतता ॥

उभयसमता चेयं सङ्गतिः सूत्रकृद्धृद्धावेतदधिकरणे तद्रूपस्य प्रत्यासत्तिरस्तीति गमयति । बुद्धिस्थप्रकारविशिष्टमेव रूपस्य प्रत्यभिज्ञान प्रदर्श्यते ब्रह्मलिङ्गत्वेनेतीतिप्रकारवाचकपदघटितेन द्वितीयसूत्रेण ॥

अत्रानिर्धारणेन पूर्वपक्ष इति प्रदर्शितमस्मद्भाष्ये ; श्रुतप्रकाशिकायां च । भवद्भाष्ये 'नेश्वरो वैश्वानरः' इति प्रथमसूत्रे पूर्वपक्षनिगमन कृतम् । अस्मत्प्रदर्शितस्वारस्यापह्नुता. श्रीमद्दीक्षिताः अनिर्धारणेनैव पूर्वपक्ष इति निश्चिक्युः । तत्र 'साधारणशब्दविशेषात्' इति सूत्राक्षराणां स्वारस्यं च प्रदर्शयामासुर्न्यायरक्षामणौ "सूत्रे 'विशेषात्' इत्येतावति वक्तव्य आत्मवैश्वानरशब्दयोः साधारण्यकीर्तनं न केवलमिह शब्दसाधारण्यमधिकरणान्तरवत्संशयमात्रबीजम् ; किं तु पूर्वपक्षस्यापि तदेव बीजमिति दर्शयितुम् । तेन जाठरादीनां पञ्चानां चतुर्णां वाऽनवधारणेनात्र पूर्वपक्ष इति सूचितं भवति" इति। चतुर्णां वेत्यस्मत्प्रदर्शितचतुःशिरस्कत्वरुचिप्रदर्शनमिव यत्र भवतां द्वेषः । 'शक्यनिर्णयत्वाशक्यनिर्णयत्वे सन्देहशिरसीकृते । तच्च साधारणशब्दस्य सूत्रस्थत्वानिबन्धनम्' इति श्रुतप्रकाशिकोक्तमनुसृतं श्रीमद्दीक्षितै ॥

अत्र चतुष्कोटिको वा संशयः ; पञ्चकोटिको वेति विवादः । तदर्थं संशायकः साधारणशब्दो वैश्वानरशब्द एको वा, आत्मशब्दो वैश्वानरशब्दश्चेत्युभयं वेति विचार ॥

संशायकशब्दस्यैकत्वे सूत्राक्षराणि स्वरसानि । वैश्वानरशब्दोऽत्र पक्षनिर्देशक इत्युभयसंमतम् । नात्मशब्दस्य ब्रह्मशब्दस्य वा पक्षत्वमुच्यते भवन्मतेऽपि । वैश्वानरस्य ब्रह्मत्वं साध्यतेऽत्र । वैश्वानराविधेयमिति च समाख्यात. प्रतीयते । वैश्वानरस्यैवात्र ब्रह्मणि समन्वयः । तस्माद्वैश्वानरः परमात्मेति पक्षसाध्यनिर्देशो भूयो भूयः क्रियते भवद्भाष्ये । आत्मशब्दस्य पक्षत्वं न भाष्येत भवद्भाष्ये । वैश्वानरशब्दस्य ब्रह्मण्यपि

साधारण्यमस्तीति प्रदर्शित श्रीभाष्ये "परमात्मनि च 'तदात्मन्येव हृदये ऽग्नौ वैश्वानरे प्रास्यत्' इति, 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति च—" इति श्रौतप्रयोगप्रदर्शनेन । अस्मत्प्रदर्शितो ब्रह्मणि प्रयोगो नाक्षिप्तो भवता ; तस्यानपलपनीयत्वात् । 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' इति भवद्भाष्योदाहृता श्रुतिः परमात्मपरतया योजयितुं स्वरसा । 'यस्माद्भुवनानामयं राजा, कं सुखं सुखहेतुः, अभिमुखा श्रीरस्येत्यभिश्रीरीश्वरस्तस्मात्तस्य सुमतौ स्याम' इत्यानन्दगिरिव्याख्या श्रियःपतिपरत्वे स्वरसा ॥

वैश्वानरशब्दस्य चतुर्ष्वपि प्रयोगस्य साधारणत्वे, वैश्वानरस्यैव पक्षत्वे च सिद्धे, कथं वैश्वानरशब्दानन्तरमेव सूत्रपठितसाधारणशब्दावगमितस्य साधारण्यस्य ब्रह्ममात्रं विहाय त्रिष्वेव विश्रान्तिर्भवेत् । वैश्वानरो ब्रह्म ब्रह्मादिचतुष्टयसाधारणत्वेऽपि ब्रह्मासाधारणशब्दलिङ्गैर्विशेषितत्वादिति खलु पक्षसाध्यहेतुनिर्देशः सूत्राभिमतः । सापेक्षः साधारणशब्दः । केषां साधारण्यमित्याकाङ्क्षा । सा चाकाङ्क्षा वैश्वानरशब्दोत्थापितार्थचतुष्टयेणापि पूरयितुं न्याय्या । न तन्मध्ये एकं विहायेतरत्रयमात्रेण । साधारणशब्दस्योभयवाद्यभिमतसर्ववस्तुसाधारण्यवर्णनमुचितम् । वैश्वानरशब्दसाधारण्यं ब्रह्माभिन्नेषु त्रिषु, आत्मशब्दसाधारण्यं तत्त्रिकभिन्नजीवब्रह्मणोरिति भिन्नाभिन्नाधिकरणत्वेन भिन्नभिन्नशब्दनिरूपितत्वेन च विरूपं खलु भवद्भवन्मतप्रदर्शनम् । आत्मशब्दग्रहणाय 'वैश्वनरो ब्रह्म, तत्सामानाधिकरण्येन पठितात्मशब्दस्य जीवब्रह्मसाधारण्येऽपि ब्रह्मशब्देन, ब्रह्मलिङ्गैश्च विशेषितत्वादित्यप्यनुमानान्तरं सूत्राक्षरेषु योजनीयं भवति । नात्र जीवमात्रविषये संशय उत्थातुमर्हति । 'तस्य भोक्तृत्वेन वैश्वानरसन्निकर्षात् ; प्रादेशमात्रमिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात्' इत्येव जीवपूर्वपक्षोत्थानवर्णनं भवद्भाष्ये । अत्र जीवशङ्काऽतीव मन्दा । जाठराग्निरेव

स्वनिर्धारणाय भिक्षामटित्वापि निर्धारणं न लभेत । कथं तत्सन्निकर्षेण तद्भिन्नस्य जीवस्य पूर्वपक्षोत्थापकबल भवेत् ? नात्र जीवशङ्कानिरासःप्रदर्श्यते केनापि सूत्रेण ; यथेतरेषा त्रयाणाम् । शङ्काप्रापक नास्ति , शङ्कानिरासो न दृश्यते । कथ तत्पूर्वपक्षप्रदर्शनस्यात्रौचित्यम् । पक्षनिष्ठं साधारण्यं संशयहेतुः । पक्षश्च वैश्वानरः सूत्रोपात्तः । अतः साधारण्यस्य तद्विषयत्वमेव न्याय्यम् ॥

किं च, छान्दोग्य एवात्मशब्दः पठ्यते । न वाजसनेयेऽग्निरहस्यब्राह्मणे । छान्दोग्येऽप्युपक्रमे 'को न आत्मा, किं ब्रह्म' इति पञ्चानामपि श्रोत्रियाणां महाशालाना महावश्याना स्वेषामात्मा कः ? किं ब्रह्मेति बुभुत्सा श्राव्येत ; 'न आत्मा' इति स्पष्टं स्वात्मनामात्मा क इति जिज्ञासा प्रदर्श्यते । 'को न आत्मा' इति जिज्ञासितस्य आत्मन कथ जीवत्वशङ्कासंभवः ? उत्तरत्रात्मानं वैश्वानरमिति समानाधिकरणतया श्रुत आत्माप्युपक्रमश्रुतो जीवानामात्मैव भवेत् । अतोऽत्र छान्दोग्यवाक्यश्रुतस्यात्मशब्दस्य जीवपरत्वशङ्का नोद्भावयितु शक्या । न तस्य जीवब्रह्मसाधारणत्वम् । अतश्छान्दोग्यश्रावित आत्मशब्दो न साधारणशब्दत्वेन ग्रहीतु योग्य । भूताग्निदेवताजीवविषयं पक्षत्रयमुपक्रममात्रं प्राणाहुत्याधारत्वादेर्द्युमूर्धत्वादेश्चायोगात्' इत्यानन्दगिरिः । 'पूर्वपक्षे जाठराग्ने, सिद्धान्ते ब्रह्मणो ध्यान फलम्' इति रत्नप्रभा ॥

अन्यच्च , कृत्स्नेऽप्येतस्मिन्नधिकरणे शास्त्रद्वयमप्येकीकृत्य विचारं प्रवर्तयति सूत्रकृदिति स्पष्टम् । सूत्रद्वयेनैको विचारः; तस्य च इतिशब्देनावसानप्रदर्शनम् , उत्तरसूत्रैः पुनरन्यो विचार इति भवता विचित्रमयुक्तिक नूतन मतं न सूत्रकृत्संमतम्, भवद्भाष्यादिसमतं वा । सम्पत्तिसूत्रे भवद्भाष्ये 'यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायते , आदित्यश्च सुतेजस्त्वगुणः , छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समाम्नायते , आदित्यश्च

विश्वरूपत्वगुणः, तथाऽपि नैतावता विशेषेण किञ्चिद्धीयते, प्रादेशमात्रश्रुतेरविशेषात्, सर्वशाखाप्रत्ययत्वाच्च' इति भाषितम् । 'अत एव न देवता भूतं च' इति सूत्रेण 'मूर्धैव सुतेजाः' इति छान्दोग्यमन्त्रवर्णार्थस्य विचारितत्वं भाषितम् । तृतीयसूत्रे च शाखाद्वयस्य मिश्रणं कृतमिति सम्प्रतिपन्नम् । अतो न शाखाभेदेन विचारस्य द्वैविध्यं पूर्वोत्तरत्वं वा ॥

छान्दोग्यविद्यामात्रस्य परामर्शे विद्याया ब्रह्मविषयत्वेन निर्णयः सुगमः । तन्मात्रपरत्वे विचारस्य शक्यनिर्णयत्वाभावपूर्वपक्षानुदय एव । 'यद्यपि को न आत्मा किं ब्रह्मेत्यात्मब्रह्मशब्दाभ्यामुपक्रमात्, उपसंहारस्य च तदानुगुण्येन नेयत्वान्न सन्देहोदयः । तथाऽपि समानप्रकरणे वाजसनेयेऽग्निवैश्वानरशब्दाभ्यां संशयः संभवति' इति श्रुतप्रकाशिका । अग्निरहस्ये 'वैश्वानरं ह वै भगवन् संप्रति वेद तन्नो ब्रूहि' इत्युपक्रमः । तत्रैव 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' 'स यो हैतमग्निं वैश्वानरम्' इत्युपसंहारे च वैश्वानरस्याग्निसामानाधिकरण्यं श्रूयते । अग्न्यादिषु शङ्कितेषु त्रिष्वपि कथञ्चिदग्निसम्बन्धोऽस्ति । त्रिषु यः कश्चिद्वा भवतु; कथंचित्सिद्धान्त्यभिमतब्रह्मैकान्त्यं न भवत्विति पूर्वपक्ष्याशयः । न्यायरक्षामणावपि प्रथमसूत्र एव 'छान्दोग्ये को न आत्मा किं ब्रह्मेत्युपक्रमेऽपि वाजसनेयिशाखायां वैश्वानरं ह वै भगवन् संप्रति वेद तन्नो ब्रूहि' इति वैश्वानरशब्दोपक्रमदर्शनेनोपक्रमस्याविनिगमकत्वात्' इति वाजसनेयविद्यासाहित्येनैव पूर्वपक्षोत्थितिः प्रदर्शिता, श्रुतप्रकाशिकोक्तस्य स्वरसत्वनिश्चयात् । अधिकरणस्यैवानुत्थितिरिति श्रुतप्रकाशिकोक्तं न समाहितं भवद्भिः । तस्य समाधातुमशक्यत्वात् । अस्मदुक्तं स्पष्टमभ्युपगतमनुसृतं च पण्डितवर्यैः श्रीमद्दीक्षितैः । अतः प्रथमसूत्रद्वये छान्दोग्यविद्यामात्रमाश्रित्य विचार इति भवता सौत्रविचारस्य शाखाभेदेन द्वैधीकरणप्रयत्नो वृथा । तथा सत्यधिकरणस्यैवानुत्थित्यापत्तिः ॥

वैश्वानरशब्द॰ शाखाद्वयसाधारणः । आत्मशब्दस्त्वेकस्यां शाखायामेव पठितः । शाखाद्वयसाधारण्येनैवात्र विचारमिच्छति सूत्रकृत् । इदं च भवन्तमेकं विहाय भवदीयाना सर्वेषां ग्रन्थकृता संमतम् ॥

द्वितीयसूत्रस्थेतिशब्दस्यास्मद्भाष्योक्तस्वरसार्थापलपनार्थमित्थं स्वपूर्वसर्वग्रन्थविरुद्धा विचारद्वयकल्पना कृता कल्पनैकरसिकैर्भवद्भि । "विचारं चोपसहरति 'इति' इति । तथा च भाष्यम् 'तस्मादपि वैश्वानरः परमात्मैवेत्यर्थ.' इत्युपसहारसूचकम । 'तत. पुनर्विचारमारभते' 'किं च पुनर्विचार एवायम्' एवं पुनर्विचारोपक्रमाय प्रक्रान्तविचारोपसहारपरेऽपीतिपदं" इति भवदीया व्याख्या द्वितीयसूत्रान्तस्थेतिशब्दस्य भवत्पूर्वसर्वव्याख्याविरुद्धा । भवदुक्तनूतनात्यन्तासङ्गतार्थस्य भवद्भाष्यकारसंमत्यन्वेषणोद्यम उपहास्य॰ । 'इतिशब्दो हेत्वर्थे—यस्मादिदं गमकम् , तस्मादपि वैश्वानरः परमात्मैवेत्यर्थ' इति भवद्भाष्यवाक्यस्यैकदेश एवोपात्तः प्रतारणार्थं भवता । तद्वाक्यपूर्वभागस्य कृत्स्नस्य भवदिष्टविरोधित्वात् पूर्वभागस्याच्छादन कृतं भवद्भिः । यस्मिन् वाक्ये भाष्यकारा महता कण्ठेनेतिशब्दस्य हेत्वर्थता निगदन्ति , तमर्थमेव विवृण्वन्ति यस्मादिति ; तत्रैव तद्विरोधेन भवन्नूतनकल्पितोपसंहारार्थवादित्व तेष्वारुरोपयिषतिवानिति भवता भवद्गोष्ठीष्वप्यश्रद्धेयतमतैव वज्रलेपायिता भवति । 'इति शब्दस्य वाक्यसमाप्त्यर्थत्व व्यावर्त्य हेत्वर्थत्वं व्यनक्ति यस्मादिति' इति वदताऽऽनंदगिरिणा भवान्निष्करुणमुपमृद्यते । 'सूत्र इतिशब्दो हेतौ' इति ब्रह्मामृतवर्षिणी । इतिशब्दस्य भवद्भाष्यरीत्या हेतुत्वार्थवर्णने तस्य वैयर्थ्यमेवेति दूषितमस्माभि. । 'अनुमानशब्देन हेतुत्वसिद्धेरितिशब्दवैयर्थ्यम्' इति श्रुतप्रकाशिका । अस्मदुक्तदूषणस्यापरिहार्यतानिश्चयेन भवता नूतनमर्थान्तरमन्विष्टम् , भवद्भाष्योक्तार्थश्च परित्यक्तः ॥

सर्वाणि सूत्राणि हेतुप्रतिपादकान्येव । क्वचित्पञ्चम्यन्तशब्दपठ-

नम् । यत्र तदपठनं तत्रापि हेतुत्वमेवावजिगमयिषितम् , ‘ स्याच्चैकस्य ब्रह्मशब्दवत्’ ‘ प्रतिज्ञाहानिरव्यतिरेकात्’ ‘पुरुषमपि चैनमधीयते ’ ‘आमनन्ति चैनमस्मिन्’ ‘ अस्मिन्नस्य च तद्योगं शास्ति’ ‘ अन्यार्थश्च परामर्शः ’ इत्यादाविव । तत्र वाक्यस्यैव हेतुत्वावगमकत्वम् । इति शब्दं विनैव तत्सूत्रेषु हेतुत्वप्रदर्शनं गम्यते , सूत्राणां न्यायसूत्रत्वात् । तन्न्यायेनात्रेतिशब्दं विनैव हेतुत्वं सुगममेव । अत्र वाक्यार्थहेतुत्वं सम्प्रतिपन्नम् । हेतुत्वावगमनार्थमत्रेतिशब्दस्य पठनीयत्वे , उदाहृतेष्वपि सूत्रेष्वितिशब्दपठनमापद्येत । ‘ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः’ इति हेतुप्रदर्शकत्वं गीतं सूत्राणां ॥

इतिशब्दो भूयः पठ्यते सूत्रेषु । तत्र सर्वत्र प्रकारवाचित्वेनैव तत्प्रयोगो दृश्यते । ‘यदेव विद्ययेति हि’ इत्यत्र प्रकारवाचितैव । ‘इति चेन्न’ इति पूर्वपक्षप्रकारानुवाद एव । ‘संपत्तेरिति’ इति पक्षविशेषप्रकारानुवाद एव । इतिशब्दस्य प्रकारार्थ एव शीघ्रप्रतीतः । अस्त्यत्र भूयसी प्रकाराकाङ्क्षा स्मर्यमाणशब्दस्य । स्मरणं च पूर्वानुभवं नियतमपेक्षते । नात्रानुभवस्य निष्प्रकारकत्वं भवद्भिरपीष्यते । ‘स्मर्यमाणशब्दश्च प्रत्यभिज्ञोपस्थापकः ’ इति श्रुतप्रकाशिका । तस्यास्ति प्रकाराकाङ्क्षा । इतिशब्दस्य चास्ति प्रकार्याकाङ्क्षा । एवमस्ति शब्दयोरुभयोः परस्पराकाङ्क्षा । आकाङ्क्षायोग्यतयोरुभयोः सत्त्वेऽप्यल्पव्यवधानमात्रान्नानन्वयशङ्कासंभवः । ‘आनन्तर्यमचोदना ’ इत्यधिकरणे ‘यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् । ’ इति वार्तिकं पठितम् । उभयाकाङ्क्षाऽत्रान्वयनियामिका । अतः ‘यदि शीर्षमिदं पादोऽयमित्यविज्ञाय इति एवप्रकारं स्मर्यमाणमन्यत्र श्रुत्यादिषु प्रसिद्धमिह प्रत्यभिज्ञायमानमनुमानं स्यादिति पादेन शीर्षं ग्रथयन्नपि श्रीभाष्यकार इति प्रथेत । किमतोऽप्यस्ति विचित्रम् ।’ इति भवदुक्तिर्निरस्ता । इतिशब्दस्य वैयर्थ्यं

भवन्मते । व्यवहितान्वयादपि वैयर्थ्यं गरीयः । सूत्रपठितेतिशब्दस्य हेत्वर्थकत्वकल्पनेन व्यर्थीकरणं; स्मर्यमाणप्रकारसमर्पणाय तत्पूर्वामितिशब्दाभ्याहारश्च महत्कौशलमावहेत् । 'सिद्धमन्नं परित्यज्य भिक्षामटति' इति न्यायगोचरतैवापद्येतैव व्याख्यातु ; भवदुक्तोपसंहारार्थकत्वमसङ्गतम्; अदृष्टचर च सूत्रेषु । विचारद्वयकल्पने बहवो विरोधाः प्रदर्शिताः । अधिकरणभेदश्चापतेत् । 'पादेन शीर्षं ग्रथयन्नपि श्रीभाष्यकार इति प्रथते किमतोऽप्यस्ति विचित्रम्' इति सूत्रान्तस्थेतिशब्दस्य सूत्रप्रथमशब्दात्पूर्वं निवेश्यान्वयप्रदर्शनविषये दूषणं भवत एव शब्दावेदपहास्यता, पदवाक्यानभिज्ञताप्रतिष्ठां चावक्ष्यतीति ध्रुवम् ॥

भवद्भाष्ये च 'यस्मादग्निरास्यं द्यौर्मूर्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते' इत्यर्थो भाष्यते । 'इतीदृश त्रैलोक्यात्मक रूपम्' इतीदृक्प्रकारकमित्येवार्थकथनम् । सौत्रेतिशब्दलभ्योऽयमर्थः । सूत्रेऽनुमानशब्दो भूयः स्मृतिवाचकत्वेन पठ्यते 'दृष्टानुमानाभ्याम्' 'शब्दानुमानाभ्याम्' 'प्रत्यक्षानुमानाभ्याम्' इत्यादौ । यत्र स्मृतिरुदाजिहीर्षिता प्रमाणत्वेन तत्र 'स्मृतेश्च' 'अपि च स्मर्यते' इति भूयः पठ्यते । अत्र स्मर्यमाणमनुमानमिति शब्दद्वयस्य पठनं विशिष्य स्मृतिप्रमाणाविवक्षां वारयति । भवदभिमतार्थे 'स्मृतेश्च' 'अपि च स्मर्यते' इति लघुसूत्रेणैव स्ववगमो भवेत् ॥

अस्त्यत्रेतिशब्दस्यान्यदपि प्रयोजनमसद्व्याख्यारीत्यनुसारे । अस्त्यापाततः स्वल्पः प्रकारभेदः श्रुत्यन्तरवर्णनेषु । न तद्भेदस्य वस्तुनो रूपभेदकत्वम्, किं त्वनुभवप्रकारैक्यमित्यपि सूचयति सूत्रकृत्, प्रकारैक्यबोधकेतिशब्दपठनेन । 'अग्निर्मूर्धा' इति वर्णनं द्युमूर्धत्ववर्णनान्न भिद्यते, 'असौ वावलोकोऽग्निः' इति दिव एवाग्नित्वेन श्रुतत्वादित्यपि प्रकारैक्यं समर्थ्यत इतिशब्देन ॥

पूर्वाधिकरणान्ते 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति मुण्डकवाक्य

ब्रह्मविषयत्वेन परामृष्टं 'रूपोपन्यासाच्च' इति सूत्रेण । तद्धर्मस्याब्रह्मणि वैश्वानरे साधारणत्वशङ्कया खल्वस्याधिकरणस्योत्थितिः । तदेव रूप सूत्रकृद्बुद्धौ परिवर्तते । तदेवात्रोपन्यस्यते सूत्रकृतेति स्वरसम् । निर्णीतवाक्यत्वात्तस्य परामर्शोऽत्र न्याय्यः । अधिकरणत्रयघटिता द्वितीयपेटिका ; यस्या त्रैलोक्यशरीरत्वं वा , सर्वशरीरत्व वोपन्यस्यते । प्रथमपेटिकायामल्पानि स्थानान्युक्तान्युपास्यब्रह्मणः । 'द्यां मूर्धानम्' इति स्मृतौ सर्वभूतान्तरात्मेति त्रैलोक्यशरीरो वर्ण्यते । अदृश्यत्वाधिकरणे च त्रैलोक्यशरीरत्वं हेतूकृतम् । एव चाधिकरणत्रयेऽनुगतत्वेन बृहद्रूपत्वं प्रदर्श्यते ॥

प्रथमसूत्रेण साधारणमपि वैश्वानरशब्द हेतुभिर्ब्रह्मरूप विशेष नियमय्य , वैश्वानरस्य ब्रह्मत्व प्रतिज्ञायानन्तरसूत्रे ब्रह्मविषयत्वेन सद्य एव निर्णीतस्य त्रैलोक्यशरीरत्वरूपस्यात्रापि प्रत्यभिज्ञान ब्रह्मलिङ्गत्वेनोपन्यस्यतीति वर्णनस्य स्वारस्यं भवन्त एव विदांकुर्वन्तु ॥

स्मरणं वा , प्रत्यभिज्ञान वा न स्मृतिमात्रपक्षपाति ; श्रुतिविद्वेषि वा भवितुमर्हति । यत्र यत्र श्रुतौ वा , स्मृतौ वेदृग्रूपस्य प्रसिद्धिस्तत्सर्वमविशेषणोदाहार्यमत्रेदृग्रूपप्रसिद्ध्यर्थमिति श्रीभाष्यकाराणामाशयः । श्रुतयः, स्मृतयश्चोदाहृता अत्र श्रीभाष्ये ॥

"तर्कपादे 'अनुस्मृतेश्च, इत्यनुस्मृतिशब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारै. प्रयुक्तत्वात्' इति श्रुतप्रकाशिकायामुक्तं भवताऽनूद्य दूष्यते 'अनुस्मृतेरिति सूत्रकृतैव वक्ष्यमाणत्वान्नाप्रसिद्धमस्मिन्नर्थे पदमिदमिति निर्लज्जमनुरहितमप्यनुसहितेन समानयन्ति, स्यात्पदमपि व्यर्थयन्ति , नेमां श्रुतिमनुमापयेद्वैश्वानरपदघटितान्तपदघटिता स्मृतिः, किं त्वग्निर्मूर्धेत्यादिकामेवानुमापयन्त्यनुमापयेत्तद्विधुरामित्यस्मानपि दूषयन्ति । तेन मूलमूलिभ्यां शब्दतोऽप्यन्यूनाधिकाभ्यामेव भवितव्यमिति निर्बन्ध कुर्वन्ति परे' इति । समुदायाधिकरणे 'अनुस्मृतेश्च' इति सूत्रितम् । 'अनुभवमुपलब्धिमनूत्पद्यमानं

स्मरणमेवानुस्मृतिः' 'दर्शनस्मरणयोः कर्तर्येकस्मिन् प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धः, अहमदोऽद्राक्षम्—इदं पश्यामि' इति तत्र भवद्भाष्ये भाषितम् । उपसर्गाणां द्योतकत्वमस्ति । अनुं विनाऽपि स्मरणस्य पूर्वानुभूतार्थविषयकत्वं नियतम् । अनुस्मृतेः प्रत्यभिज्ञापरत्वेन सूत्रकृत्प्रयोगेऽभ्युपगम्यमाने स्मृतेरपि तत्परत्वेन प्रयोगवचनं सुलभम् ; स्मृतिस्वभावात्, उपसर्गस्य द्योतकत्वाभ्युपगमाच्च ॥

उपसर्गाणां द्योतकत्वस्याज्ञानं तद्भत एव लज्जामावहेत् ; यदि लज्जा तस्य चेतसि स्यात् । वैश्वानरपदघटितत्वं नैव हेतूकृतं श्रीभाष्यकृद्भिर्वा, श्रीमत्सुदर्शनसूरिभिर्वा यथा भवान् बभ्रमीति । श्रीभाष्योपन्यस्ता मुण्डकश्रुतिर्वा 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इति स्मृतिर्वा न वैश्वानरपदघटिता । तदुभयमप्युपन्यस्तं श्रीभाष्ये । इत्थं स्वभ्रान्तिमात्रकल्पितस्यास्मदनुक्तस्य लज्जावहत्वेनोपालम्भनमुपालब्धुरेव लज्जामावहेत् । 'परमात्मनस्त्रैलोक्यशरीरत्वविषयं द्यां मूर्धानमित्यादिस्मृतिवचनं स्वमूलत्वेन वैश्वानरविद्यायाः परमात्मविषयत्वं कल्पयतीति व्याख्यानमनुपपन्नम् । स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति । न तु वैश्वानरविद्यामेव कल्पयितुं प्रभवति । श्रुत्यन्तरसंभवेन कल्पकस्यान्यथासिद्धत्वात् । अस्ति हि 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' वित्यादिश्रुतिस्तन्मूलतया संभाव्यमाना । तस्मादाभ्यां श्रुतिस्मृतिभ्यामैकार्थ्य'प्रत्यभिज्ञानमेवास्मिन् सूत्रे हेतुतया विवक्षितम्' इति भवदनूदितश्रुतप्रकाशिकाक्षराणि । सुस्पष्टानामेतद्वाक्यानामर्थानवबोधस्तन्मिथ्यानुवादश्च किं न लज्जावहः खण्डनग्रन्थकरणप्रतिष्ठालिप्सोः । 'असति ह्यनुमानम्' इति स्मृतिबलाच्छ्रुतिकल्पने स्मृत्यर्थाविरोधिनी या काचिच्छ्रुतिरेवानुमाप्येत । न वैश्वानरवाक्यरूपश्रुतिविशेषस्य सा कल्पिका भवेत् । समानार्था श्रुतिरेवान्वेष-

णीया ; समानार्थाश्च बह्व्यः श्रुतयः । 'द्यां मूर्धानम्' इति स्मृतिः 'अ-
ग्निर्मूर्धा—' इति मुण्डकश्रुतिविषयिणी किं न भवेत् ? मुण्डकश्रुतिस्तत्स्मृते-
र्मूलमिति समावयितुं शक्यमेव । भवतु मुण्डकविद्या ब्रह्मविषया , इयं
वैश्वानरविद्या न ब्रह्मैकान्तेति शक्यनिर्णयेति खल्वत्र पूर्वपक्ष्याक्षेपः ? अन-
न्यथासिद्धं खलु कल्पकं भवेत् ॥

अनुमानमिति शब्दस्य ज्ञापकमित्यस्यदर्थः । स्यात्पदस्यार्थो भा-
ष्यद्वयेऽपि तुल्यः । 'ज्ञापकं भवितु योग्यम्' इत्यर्थे समानो मतद्वयेऽपि ।
'स्यात्पदमपि व्यर्थयन्ति' इति भवद्दूषणं मृषा । 'स्याच्चैकस्य ब्रह्मशब्दवत्
इति सूत्र इव स्यात्पदमत्र प्रयुक्तम् । अधिकरणोत्थापिकाऽधिकरणप्रस-
ङ्गिका वैश्वानरविद्याया ब्रह्मान्यविषयत्वशङ्का निरस्यते 'ब्रह्मणि प्रसिद्धं त्रैलो-
क्यशरीरत्वमत्र तदेवेदमिति प्रत्यभिज्ञायमानं वैश्वानरस्य ब्रह्मत्वज्ञापकलिङ्गं
भवेत्' इति कथनेन । न स्यात् त्रैलोक्यशरीरत्वस्य ब्रह्मलिङ्गत्वमित्याशक्य
'स्यात् तस्य ब्रह्मलिङ्गत्वं प्रत्यभिज्ञाबलेन' इत्युच्यते । यथा न स्यादेकास्मि-
न्नेव प्रकरणे आकाशशब्दस्य गौणत्वं , मुख्यत्वं चेत्याक्षिप्ते 'स्याच्चैकस्य
ब्रह्मशब्दवत्' इति पूर्वपक्षिणा प्रत्युच्यते वियदधिकरणे । त्रैलोक्यशरीर-
त्वरूपस्य ब्रह्मासाधारण्यं न स्यादित्युक्ते बहुप्रमाणप्रत्यभिज्ञोपन्यासेनासाधार-
ण्यं स्यादित्युच्यते । साधारणत्वेन शङ्कितस्य प्रत्यभिज्ञया विशेषणं स्या-
दित्युच्यते पूर्वसूत्ररीतिमनुसृत्य ॥

'एकेनैव हि परापरसाधारणेन भवितव्यं पक्षीकृतेन च । तथा हि—
मनोमयः , अत्ता , गुहां निविष्टः, अन्तर , अन्तर्यामीति परापरसाधारणः
पक्षीकृतः सर्वत्रेति चेत् , न । प्रकृतेऽपि प्रकारान्तरेण साधारणीकरणात्,
आत्मशब्दसमानाधिकरणो ह्यत्र वैश्वानरशब्दः ॥' इति भवदुक्तिः पूर्वोक्तेन
निरस्ता ॥

'आत्मशब्दसमानाधिकरणो ह्यत्र वैश्वानरशब्दः । स यद्यात्मश-

ब्दं गौणयति तदा जाठरादित्रयसाधारणः । यदीतर इतरं लाक्षणिकय-
ति तदा जीवेशसाधारण इत्येवं साधारणशब्दविशेषोऽयं पूर्वेभ्यो विलक्षणः।
गौणयत्येवात्मशब्द विशेष्यवाची वैश्वानरशब्द इति जाठरादयो वा, लाक्ष-
णिकत्वपक्षेऽपि जाठरसन्निकृष्टा वा , जीवो वा वैश्वानर इति पूर्वपक्ष
साधारणशब्दविशेषादित्याह' इति भवदुक्तिरपि निरस्ता । 'अत्र
वैश्वानरशब्द एव जीवेतरचतुष्टयसाधारणः । आत्मशब्दस्तु परसाधारणेन
वैश्वानरशब्देन विशेषितो न स्वातन्त्र्येण कस्यापि प्रतिपादकः । न हि
गोशब्दविशेषितश्चतुष्पाच्छब्दोऽश्वपरो भवितुमर्हतीति जीव विसृज्याधिक-
रणमेवान्मूलयन्ति परे । यतस्तथा सत्यात्मशब्दविशेषितो वैश्वानरशब्दः
परस्मिन्नेव विश्राम्यति' इति भवदुक्तिः । अत्रेमानि श्रुतप्रकाशिकाक्षराणि
'जीवपरसाधारणात्मशब्दसद्भावेऽप्यात्मशब्दस्य वैश्वानरमात्मानम्— इति
वैश्वानरशब्दविशेषितत्वात् , वैश्वानरशब्दस्य च जीवमात्रे प्रयोगाभावादिह
जीवविषयत्वशङ्का न सम्भवति । न हि गोशब्दविशेषितस्य चतुष्पाच्छब्द-
स्याश्वादिपरत्वशङ्कासम्भव इत्यभिप्रायेण पञ्चस्वित्यनुक्तिः' इति । वैश्वानर-
शब्दो न जीववाचक इत्युभयसमतम् । आत्मशब्दश्च न जीवासाधारण ।
जीवब्रह्मोभयसाधारण स इति भवद्दर्शनम् । तेन जीवावाचकवैश्वानरशब्द-
विशेषित आत्मशब्दो ब्रह्म गमयेन्न जीवम् । वैश्वानरस्य जीवेऽप्रसि-
द्धत्वात् । तस्य ब्रह्मणि प्रयोगो न प्रतिषिद्ध्यते भवता । तस्यार्थचतुष्टय-
साधारणत्वं न निषिद्ध्यते । अस्मत्प्रदर्शितश्रुतिप्रयोगसत्त्वान्न तस्य ब्रह्मसा-
धारणत्व निषेद्धुं शक्यम् । अत एव तन्न निषिद्ध्यते भवद्भिः । वैश्वा-
नरात्मशब्दयोर्ब्रह्मणि प्रयोगसत्त्वाद्वैश्वानरशब्दविशेषित आत्मा ब्रह्म भवेन्न
जीवः । सर्वथा न जीवशङ्कासम्भवः । वैश्वानरदेवतावाचकत्वे आत्मशब्दो
ऽपि तत्परत्वेन सुख नीयेत । देवताविशेषभूतजीव इति देवतापूर्वपक्ष एव
पर्यवस्येत् । 'न आत्मे'ति श्रुतत्वान्नात्मशब्देन जीवपूर्वपक्षसंभवः ॥

'न च विशेष्यवाचिनो गौणत्वमन्याय्यमिति वाच्यम् , तर्हि तस्य शक्तिनियन्त्रणार्थं दत्तस्यापि तत्त्व दूरनिरस्तम् । अन्यथा कुत्रापि विशेषेण शक्तिनियन्त्रण न स्यादित्यहो महदिद पाण्डित्य प्रदर्शित विशेषणेन विशेष संपादनीये नेदं कुत्रापि प्रसञ्जयता' इति भवदुक्तिर्न सुबोधा । वैश्वानरशब्दस्य विशेष्यत्व स्पष्टमवगम्यते तस्य पक्षीकरणेन । अत आत्म-ब्रह्मशब्दयोर्विशेषणत्व सूत्रकारबुद्ध्या, न विशेष्यत्वम् । समभिव्याहारेणार्थ-विशेषाव्यवस्थापकत्वमभिप्रेत विशेषणपदेन ॥

'किं च, सत्यप्यात्मशब्दविधुरेऽग्निशब्दघटिते च शाखान्तरीये वाक्ये किमर्थं तद्विपरीतमर्यादया विचार प्रवर्तित इति कुतः कथञ्चिदपि नालोचित भवता' इति भवदुक्तिर्वाजसनेयिवाक्यस्थप्रथमसूत्रादारभ्य विचा-र्यत्वमिति पूर्वोदाहृतश्रुतप्रकाशिकावाक्यैः ; न्यायरक्षामणिवाक्यैश्च गलह-स्तिता । तद्वाक्य विहायाधिकरणस्यानुत्थितिरेव भवेदिति च प्रदर्शितम् ॥

'अत्रैवोक्तयुक्त्या भवति साधारण्य शब्दस्य , न शाखान्तर इति' इति भवदुक्तिरपि तत एव निरस्ता ॥

'भवन्मतावलम्बने तु तत्रास्त्यग्निशब्दः , अत्रास्त्यात्मशब्द इत्युभयसाम्ये कथं तद्बलेन पुनर्विचारः' इति भवदाक्षेप । प्रथमसूत्रे वैश्वानरस्य चतुर्षु साधारणत्वेनान्यतमानिर्धारण पूर्वपक्षितम् । साधारणस्यापि वैश्वानरशब्दस्य 'मुमुक्षुभिः पृच्छ्यमानत्वमात्मत्व ब्रह्मत्व ब्रह्म-शब्दस्थाने वैश्वानरशब्दप्रयोग ; फलनिर्देशश्च, ' इति हेतुभिः परमात्मत्व-मुक्तम् । द्वितीयसूत्रे द्युमूर्धत्वादिब्रह्मरूपस्य प्रत्यभिज्ञानमुक्तम् ॥

पुनर्निर्णयाशक्यता पूर्वपक्ष्यते । वैश्वानरशब्दस्य साधारण्यमात्र-मुक्तं प्रथमसूत्रेऽनिर्धारणपूर्वपक्षहेतुतया । उक्तहेतूना ब्रह्मशब्दब्रह्मलिङ्गा-ना ब्रह्मनिर्धारकत्वेन सिद्धान्तिनोपन्यसने पूर्वपक्ष्यस्मिन् सूत्रे जाठराग्निपक्ष-बलमुपन्यस्यति । आत्मब्रह्मशब्दविशेषितत्वमुक्तं प्रथमसूत्रे ब्रह्मनिर्णयाय ।

ब्रह्मलिङ्गानि चोपन्यस्तानि । साधारणोऽपि वैश्वानरशब्दोऽग्निशब्देन विशेष्यते 'स एषोऽग्निर्वैश्वानर ; स यो हैतमेवमग्निं वैश्वानरम् .... पुरुषेऽन्तः प्रतिष्ठितं वेद' इति । अन्तः प्रतिष्ठितत्वलिङ्गमपि श्रूयते । प्राणाहुत्याधारत्वं च श्रूयते । शाखाद्वयमप्येकीकृत्याल पूर्वपक्षहेतव उपन्यस्यन्ते । अत्र जाठराग्निपक्षमात्रपरामर्श इत्यसन्मतम् । भवद्भाष्येऽपि 'स एषोऽग्निर्वैश्वानरः' इति समानाधिकरणाग्निशब्द एवोपन्यस्तः सूत्रोपात्तशब्दपदपरामृष्टत्वेन । 'आदिपदेन तद्यद्भक्तं प्रथममागच्छेत् ... इत्यादिना च प्राणाहुत्यधिकरणतामात्रसङ्कीर्तनम् , 'पुरुषेऽन्तः प्रतिष्ठित वेद' इत्यन्तः प्रतिष्ठानं च जाठरलिङ्गानि गृह्यन्त इति च भाषितम् । शाखाद्वयदृष्टहेतव उपन्यस्ता जाठरपरत्वेन । 'कुतो न्वेष निर्णयः , यदुभयथाऽपि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयः , न जाठरविषय इति' इत्यनिर्णयपूर्वपक्षोऽस्मिन्नधिकरणे सूत्रकाराभिमत इति भवद्भाष्यकाराभिप्रायो द्योत्यते । यद्यपि भूतदेवतापक्षावप्यत्रातिसंग्रहेण सूचितौ, 'तथा दृष्ट्युपदेशात्' इति सिद्धान्तप्रदर्शकसूत्रखण्डदृष्टतथाशब्देन जाठरमात्रस्यैव परामर्शकत्वं स्पष्टं भाषितम् । तथा चैतत्सूत्रस्य श्रीभाष्यप्रदर्शितं जाठरमात्रनिरासपरत्वं स्वरसम् । उत्तरसूत्रे एतदितरद्वयपरत्वनिरासः स्पष्टः । बहुसूत्रघटितेऽस्मिन्नधिकरणे शारीरमात्रस्य पूर्वपक्षणं वा , निरासो वा केनापि सूत्रेण न क्रियते । एतेनापि तद्विषयपूर्वपक्षस्य सूत्रकारानभिमतत्वं सुगमम् । अतोऽन्तः प्रतिष्ठानसहचरहेतुभिर्जाठरभाव शङ्कित इह सूत्रे ॥

''तथा दृष्ट्युपदेशात्' इति सिद्धान्तहेतुर्जाठरमात्रशरीरकत्वबोधकः । सौत्रदृष्टिशब्दस्योपासनपरत्वं संप्रतिपन्नम् । 'तथा जाठररूपेण परमेश्वरस्य दृष्टेरुपासनाया उपदेशादित्यर्थः'' इति श्रीरामानन्दाः । नात्र दृष्टिविधित्वरूपप्रतीकोपासनशङ्का । 'तथाशब्दस्य सप्तम्यर्थकत्ववर्णनं क्लिष्टम् । तस्मि-

जाठरे ब्रह्मदृष्ट्युपदेशः कृत इति खल्वर्थो वर्णनीयः प्रतीकालम्बनोपदेशवर्णनाय । प्रतीकालम्बनरूपदृष्टिविध्युपदेशे सर्वपाप्मप्रदाहरूपफलोपदेशो न घटते । अत एव प्रथमोपन्यस्तदृष्टिविधिपरत्वव्याख्याऽस्वरसेति मन्वाना भवद्भाष्यकाराः 'अथ वा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते ; प्राणशरीरो भारूप इत्यादिवत्' इत्यभाषिषत । 'जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात्' इति श्रीभाष्यकाराः । 'असम्भवात्' इति हेतोर्द्युमूर्धत्वादिरूपस्य जाठराग्नावसम्भवबोधकत्वमिति भाष्यद्वयसम्मतम् । "यदि केवल एव जाठरोऽग्निर्विवक्ष्येत ततः 'मूर्धैव सुतेजाः' इत्यादिविशेषस्यासम्भव एव स्यात्" इति भवद्भाष्यम् । 'यथा तु देवताभूताग्निव्यपाश्रयेणाय विशेष उपपादयितुं न शक्यते तथोत्तरसूत्रे वक्ष्यामः' इत्युत्तरवाक्येनैतत्सूत्रस्य जाठराग्निमात्रविषयत्वं स्पष्टं भाषितम् । 'पुरुषमपि चैनमधीयते' इत्यत्र जाठरव्यावर्तकत्वं वर्ण्यते भाष्यद्वयेऽपि । यद्यपि द्वितीयतृतीयहेतू भूतदेवतयोरपि व्यावर्तनक्षमौ, प्रथमहेतोर्जाठरमात्रविषयत्वात् तत्सहपठितयोरपि तन्मात्रविषयत्वमस्मिन् सूत्रेऽभिप्रेयते । उत्तरसूत्रे द्वितीयतृतीयहेत्वोरेव परामर्श इष्यते । अत एव पृथग्योगकरणम् । भूतदेवतान्यतरविशिष्टब्रह्मोपासनमत्र नोपदिश्यते । पृथग्योगाकरणे 'तथा दृष्टि—' इति तद्द्रष्टृत्वमपि सिद्धान्तितं स्यादुपासनस्य ॥

"एवं च सति स्मृत्यवष्टम्भेन प्रबलीकृत्य सिद्धान्ते श्रुत्यन्तरावष्टम्भेन पुनर्विचारमारचयतीति सुश्लिष्टं भवति । अन्यथाऽऽत्मशब्दबलात्सिद्धान्तितेऽग्निशब्दबलात् पुनराशङ्कति वक्तव्यम् । तच्च नानुमन्यते सूत्रकारः । यतो लिङ्गादेवायं विशेषित इत्याह 'स्यादेवेदमनुमापकं विशेषकमिति' । अत एव भवानपि तथैवाह द्युमूर्धत्वादिना विशेषादिति" इतिभवदुक्तिः । प्रथमसूत्रे प्रतिज्ञा कृता । वैश्वानरशब्दस्य चतुर्षु साधारणत्वाद्विशेषनिर्णयोऽशक्य इति पूर्वपक्षनिरासाय 'विशेषात्' इति ब्रह्मशब्दाविशेषितत्व, ब्रह्मलिङ्गविशेषि-

तत्वं चोपन्यस्तं तत्सूत्रे । प्रतिज्ञाहेतूपन्यासं प्रथमसूत्रेण कृत्वा यया शङ्कयाऽधिकरणमुत्थितं तां शङ्कां वारयति द्वितीयसूत्रेण । शङ्काहेतुरेव ब्रह्म-निर्णयायोपयुज्यत इति च प्रदर्शितं तेन सूत्रेण । एवं ब्रह्मविषये शब्द-लिङ्गादीना विशेषकत्वे उक्ते, शब्दो लिङ्गं च जाठरविषयेऽप्यस्ति । ततो ऽनिर्धारणमेवेति पुनराशङ्क्य निर्धारणं सिद्धान्त्यते तृतीयसूत्रेण। प्रत्याक्षेप पुनर्विचारान्तरकल्पना भवतामेव रोचेत । लिङ्गमेवोपन्यस्तं द्वितीयसू-त्रेण । प्रथमसूत्रेण द्वितयमप्युपन्यस्तम् । द्युमूर्धत्वस्य प्रत्यभिज्ञानं परमात्मलिङ्गत्वेनोक्तं द्वितीयसूत्रे । परमात्मपरत्वनिर्धारणोपयुक्तं श्रुति-लिङ्गोपन्यासं कृत्वा पूर्वपक्षिणाऽपि जाठरविषयत्वेन तदुभयोपन्यासमाशक्य निरस्यति तृतीयसूत्रेण । जाठरस्यात्रोपास्यशरीरतयोपादेयत्वस्येष्टत्वान्न तस्यात्यन्तहानम् , यथा भूतदेवतयो· । अत एव तृतीयसूत्रेण जाठरस्य प्राधान्यनिरासं तस्य विशेषणकोटिगतस्य विशिष्टोपासनान्तर्गततामभ्युपगम्य प्राधान्येनाप्राधान्येन वेतरयोरनभ्युपगमं चतुर्थसूत्रेण निर्धारयति । भवद्भा-ष्यरीत्या द्युमूर्धत्वलिङ्गस्य प्रथमसूत्रेणैव हेतूकरणे, तस्यैव द्वितीयसूत्रे उप-न्यास· तृतीयसूत्रे 'असम्भवात्' इति तस्यैव जाठरविषयासम्भावितत्वेन पुनरुपन्यासः , तस्यैव भूतदेवताविषये चतुर्थसूत्रे पुनरुपन्यास इति त्रिवारं पुनर्वचनं भवेत । प्रथमसूत्रश्रुतप्रकाशिकान्ते उक्तम् 'द्युमूर्धत्वादिविशि-ष्टतारूपधर्मस्यास्मिन् सूत्रेऽनुक्तिस्तस्यानन्तरसूत्रोक्तत्वात्' इति । तृतीय-सूत्रे जाठरलिङ्गस्यान्त प्रतिष्ठानस्य, जाठराविषयकाग्निशब्दस्य च विशेषणत-योपास्यान्वयेनावकाशं प्रदर्श्य तत्पूर्वसूत्रोपन्यस्तद्युमूर्धादिरूपलिङ्गस्य जाठरेऽ त्यन्तासम्भवः प्रदर्श्यत एव । तयोर्ब्रह्मण्यनन्यथासिद्धिरुच्यते । तथा चात्र पूर्वपक्ष्युपन्यस्तान्त·प्रतिष्ठानलिङ्गम् , अग्निशब्दश्च दृश्येते । तस्मि-न्नेव वाक्ये 'स एष वैश्वानरोऽग्निर्यत्पुरुष ' इति प्रदर्श्यते ॥

'किं च वैश्वानरो विशेषादिति वक्तव्ये साधारणशब्दविशेषोऽयं ल-

क्षणया , रूढ्या च पञ्चानां साधारण्यात् । अथापि विशेष्यतेऽय लिङ्गेनेति हि सूचयति विस्पष्ट साधारणशब्दविशेषादिति । तथैव च समादधाति लक्षणया तथा दृष्ट्युपदेशादिति । लक्षणा चात्मश-ब्दसवलनादित्यवोचाम' इति भवदुक्तिर्दुरवबोधा । उदाहृतन्यायरक्षामणि-वाक्यात 'साधारणशब्द , इति सूत्रखण्डस्यानिर्धारणपूर्वपक्षद्योतकत्व प्रयोज-नमिति पूर्वमेव प्रदर्शितम् । अत्र 'पञ्चानामपि साधारण्यात्' इति वैश्वा-नरशब्दस्य पञ्चसाधारण्यमुच्यते भवता । तेन च वैश्वानरशब्दस्यैकस्यैव साधारण्यशङ्कया प्रथमसूत्रप्रवृत्तिरिति भवतैवाकामेनाभ्युपगत भवति । लिङ्ग-मात्रेणात्र विशेषवचनमिति न । शब्दलिङ्गे उभे अप्युपन्यस्येते पक्षद्वयेऽपि-अग्निशब्दः , पुरुषशब्दश्चोपन्यस्यत इति भवताऽपि संप्रतिपन्नम् । प्रथम-सूत्रे विशेषशब्देन ब्रह्मशब्देन साधारणशब्दस्य विशेषणम , तृतीयसूत्रे पु। रुषशब्दबलं चोपन्यस्येते । 'तथा दृष्ट्युपदेशात्' इति वैश्वानरविशेषका-ग्निशब्दे प्राणाहुत्याधारत्वपुरुषान्त प्रतिष्ठानलिङ्गं च । 'तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनीति' उपासात्रैविध्यमूलसूचितन्यायमवलम्ब्य अग्निशब्दो जाठराग्निशरीरकब्रह्मपर इत्यर्थोऽवसीयते । 'लक्षणा चात्मशब्दसंवलनात्' इति भवदुक्तिस्तृतीयसूत्रेण विप्रतिषिद्धा । जाठरवाचकत्वेनोपन्यस्तस्याग्नि-शब्दस्यैवाग्निशरीरकत्वार्थत्वप्रदर्शनात् ॥

'वैश्वानरशब्दः परसाधारण , तस्यास्ति विशेषणद्वयमात्मशब्दोऽ ग्निशब्दश्चेति , तत्रात्मशब्दस्तूष्णीमास्ते, अग्निशब्दस्तु ठगिति तर्जयति, ततोऽतिभीत सूत्रकार कथञ्चित्समाधाय मुन्यन्तरमपि सहायी-करोति स्मेति वदतां न कोऽपि प्रतिवक्ता इति ' भवत्सरस्वतीनर्तनं न शोभनम् । वैश्वानरशब्दस्य ब्रह्मसाधारण्याभावे प्रथमसूत्रे साधारण-शब्दविशेषादिति नासूत्रयिष्यतेति पूर्वमेवोपपादितम् । आत्मशब्देन वैश्वानरशब्दविशेषण प्रथमसूत्रहेतुना विवक्षित भवन्मतेऽपि । 'को न

आत्मा किं ब्रह्म इति चात्मब्रह्मशब्दाभ्यामुपक्रम इत्येवमेतानि लिंगानि परमेश्वरमेवावगमयन्ति' इति भवद्भाष्यं आत्मशब्दोपक्रमब्रह्मुपन्यस्यति प्रथमसूत्रे सौत्रविशेषपदार्थत्वेन । इदं भाष्यद्वयेऽपि समानम् । आत्मशब्दस्थानेऽग्निशब्दं, ब्रह्मलिंगस्थाने जाठरलिंगानि चोपन्यस्य पुनरप्यनिर्णयप्रत्यवस्थानं क्रियते शब्दादिभ्य इति । भवद्भाष्ये शब्दशब्देन तत्र वैश्वानरशब्दग्रहणभाषणं प्रथमसूत्रस्पष्टोक्तसाधारण्यविरुद्धम् । साधारणस्य कथ शब्दत्वम् । आत्मशब्दो न तूष्णीमास्ते । अग्निशब्देन सत्प्रतिपक्षः स इति परस्परप्रतिबन्धकत्वे शब्दद्वयमप्युदाह्रियत एव पूर्वपक्षिणा अनिर्णयसाधनाय । पक्षद्वयेऽपि शब्दलिंगयोः सत्त्वात् अनिर्णय इत्येव पूर्वपक्षः । न पूर्वपक्षस्याग्नौ वा जाठरे वा विश्रमः । अग्निशब्दबलेन जाठरलिंगबलेन च पुनरनिर्णये शङ्किते, प्रत्युच्यते सिद्धान्तिना 'सन्तु जाठरलिंगानि, अस्तु चाग्निशब्दः, जाठरस्यापि प्रतिपादनमस्तु नाम, तस्य वैश्वानरब्रह्मविशेषणतया प्रतिपादनं भवतु, जाठराग्निविशिष्टपरमात्मोपासनमत्र विधीयताम्' इति । 'पुरुषशब्दश्चात्र वैश्वानरस्य ब्रह्मत्वं 'निश्चाययति' इति सिद्धान्ती ॥

अत्र जैमिनेः साहाय्यं नापेक्ष्यते बादरायणेन अनिर्णयपूर्वपक्षनिरसनाय । अग्निशब्दस्य योगार्थपौष्कल्यात् साक्षाद्ब्रह्मवाचकत्वं सुवचमिति स्वाभिमतपक्षान्तरप्रदर्शनमात्रं क्रियते जैमिनिमुखेन साक्षात्सूत्रे ॥

यदुच्यते भवता 'यौगिक्येव वृत्तिराश्रीयते भवद्भिरपि परस्मिन्वैश्वानरशब्दस्य कृशानौ रूढस्य, तत्रभवन्तः स्वयमेव व्युत्पन्नाः पूर्वमेव, वयं तु पश्चादेव व्युत्पादिताः, पक्षेण यतो जैमिनिनैवाचार्येण व्युत्पादिताः, न तु बादरायणेन, यतस्तेन तथा दृष्टिरेवोपदिष्टाऽसभ्यं' इति तदुभयभाष्याज्ञानमूलम् । न वयं वैश्वानरशब्दस्य ब्रह्माणि योगमात्रं ब्रूमः । 'वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्' इति श्रीभाष्यम् । प्रयोगवशाद्ब्रह्मण्यपि रूढि-

रेव बादरायणदृष्ट्या । श्रीभाष्योदाहृतस्य 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयन्ते' इति प्रश्नोपनिषद्वाक्यस्य परमात्मपरत्वं समर्थितं श्रीमद्दीक्षितैर्नयमयूखमालिकायाम् । भाषितं च तस्य ब्रह्मपरत्वं भवदीयोपनिषद्भाष्ये । 'वैश्वानरः सर्वात्मा विश्वरूपो विश्वात्मत्वाच्च' इति तत्र भाषितम् । तद्वाक्येऽप्यग्निवैश्वानरशब्दौ समानाधिकरणपाठितौ ।

तथा दृष्ट्युपदेशात् इति सूत्रपदस्य 'परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टोपासनोपदेशात्' इति श्रीभाष्यार्थः । 'अथ वा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते ।' इति भवद्भाष्ये जाठराग्निविशिष्टप्रकरणिभूतपरमेश्वरोपासनमेव भाष्यते । तत्र वैश्वानरशब्दप्रयोगमात्रं न चतुरम् । प्रकरणिनो विशेष्यस्योपास्यस्य वैश्वानरत्वात् । न वैश्वानरस्यैव वैश्वानरोपाधित्वं सम्भवि । श्रौतवैश्वानरशब्दस्य परमात्मवाचकत्वमेवाश्रीयते सूत्रकृता तथादृष्टिसूत्रे ।

'साक्षादप्यविरोधं जैमिनिः' इत्यत्र वैश्वानरशब्दसमानाधिकरणपाठितस्याग्निशब्दस्य परमात्मपरत्वे योगार्थपौष्कल्यमुक्त्वा, अग्निशब्दस्य साक्षादेव परमात्मवाचकत्वमुच्यते इति वयम् । न तत्सूत्रे वैश्वानरशब्दस्य योगार्थकथनं क्रियते । अग्निशब्दस्य ब्रह्मपरतया व्युत्पादनं क्रियते तत्सूत्रेणेति भवद्भाष्यसम्मतमेव । 'अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति' इति तत्र भाषितम् । 'नावश्यमग्निशरीरकत्वेनोपास्यत्वायेदमग्निशब्दसामानाधिकरण्यम् । अग्रनयनादियोगेन परमात्मन्येवाग्निशब्दस्य साक्षाद्वृत्तेः सामानाधिकरण्याविरोधं जैमिनिराचार्यो मन्यते' इति श्रीभाष्यकारा वेदान्तसारे साक्षात्सूत्रार्थमभाषिषत । पक्षद्वयेऽपि, सूत्रद्वयेऽपि, वैश्वानरशब्दः परमात्मवाचक एवास्मन्मते । 'पूर्वं जाठराग्न्युपाधिकः परमेश्वर उपास्य इत्युक्तम् । इदानीं तु विनैवोपाधिकल्पनां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते'

इति भवद्भाष्यभाषितं नास्मद्भाष्यवर्णनाद्भिन्नम् । अग्निशरीरकत्वं विना केवलस्य परमात्मनः साक्षादुपास्यत्व सिद्ध्यतीति साक्षाच्छब्दस्य द्विगुणं स्वारस्यम् । अभिधाने साक्षात्त्वम्, उपासने च साक्षात्त्वम् ॥

अत्र चरमसूत्रेण 'निर्विशेषे ब्रह्मण्युपसंहारः' इति भवदुक्तिरत्यन्तविचित्रा । वैश्वानरविद्यायाः सगुणत्वं सर्वैर्भवदाद्यैः सप्रतिपन्नम् । अस्य पादस्य सगुणपरत्व च संप्रतिपन्नम् । 'परोपास्तिपरं वैश्वानरवाक्यमित्युपसंहरति' इत्यधिकरणोपसंहारं वर्णयन्नानन्दगिरिरपि भवन्तं प्रतिवक्ति ।' 'प्रदेशविशेषकल्पनाया गतिमुपपादयति अभिव्यक्तेरित्यादिना' इति भवदुक्तिः । अभिव्यक्त्यनुस्मृतिसूत्राभ्यां तदुपपत्तिः प्रदर्श्यत इति समानमावयोः । संपत्तिसूत्रेण तदनन्तरसूत्रेण चोपासककृताहरहःप्राणाहुतेरग्निहोत्रसंपत्त्यर्थं उरआदेर्वेद्यादित्वपरिकल्पनं प्रतिपाद्यत इति वयम् । भगवत्पादीये उपनिषद्भाष्ये 'अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन् आह—एतस्य वैश्वानरस्य भोक्तुः उर एव वेदिः, आकारसामान्यात् । 'लोमानि बर्हिः' अग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नात्राग्निहोत्राङ्गेतिकर्तव्यताप्राप्तिरिह' इति भाषितम् । सौत्रसंपत्तिशब्दः उपनिषदर्थत्वेन भवद्भाष्यभाषितां संपत्तिमेव गृह्णातीति अस्मद्भाष्यार्थस्य स्वारस्यं स्फुटम् ।

---

## तृतीयःपादः ॥

### द्युभ्वाद्यधिकरणम् ॥

'विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाक्यवर्गः' इति विश्वस्य ब्रह्मशरीरत्वबोधकानि वाक्यानि व्यचारिषत पूर्वस्मिन् पादे । सर्वत्रात्मतयान्तर्यामितया परमशरीरितया ब्रह्मणोवस्थितिबोधकानि वाक्यानि विचारितानि तत्र । 'सर्वत्र' इत्युपक्रम्य 'आमनन्ति चैनमस्मिन्' इत्युपसंहरणेन सर्वत्र तस्यान्तरवस्थानं प्रदर्शितम् । 'विश्वाधारः स आत्मेत्यभि-

लपनपरस्तर्कणीयस्तृतीये' इति ब्रह्मणो विश्वाधारत्वबोधकानि वाक्यानि विचार्यन्तेऽत्र । विश्वस्य ब्रह्मण्यवस्थितिः, ब्रह्मनियाम्यता चात्र निरूप्येते । 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।' इत्युक्त विषयद्वय पादद्वयेन क्रमेण प्रदर्श्येते । आधेयत्वविधेयत्वशेषत्वानि शरीरलक्षणम् । आत्मा शरीरी । विश्वात्मा विश्वशरीरी । पति शेषी । 'पत्यादिशब्देभ्यः' इति पादान्त्यसूत्रेण परामृष्टानि 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' 'एष सर्वभूताधिपतिः' इत्येवंजातीयकानि वाक्यानि नियन्तृत्वशेषित्वसमर्पकाणि । आत्मशब्दश्च नियन्तृभूतव्याप्तृविशेषवाची । आत्मशब्देनोपक्रम्य पतिशब्देनोपसंह्रियते । 'द्युभ्वाद्यायतनम्' 'स्वे महिम्नि' 'आत्मैवेदं सर्वम्' 'आत्मतः प्राण' 'अम्बरान्तधृतेः' 'प्रशासनात्' 'परात्परं पुरिशयं पुरुषमीक्षते' 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' 'ईशानो भूतभव्यस्य, 'नामरूपयोर्निर्वहिता ते यदन्तरा' सर्वस्य पतिः सर्वस्येशानः' इति श्रुतिसूत्राणीदं विशदीकुर्वन्ति ॥

मुण्डके विचारितमदृश्यत्वाद्यधिकरणे । 'रूपोपन्यासाच्च' इति तत्र त्रैलोक्यशरीरत्वे उपस्थापिते, तस्य वैश्वानरविषयेऽपि श्रूयमाणत्वाद्वैश्वानरस्य जीवत्वशङ्कानिरसनपूर्वकं ब्रह्मत्वस्थापनं प्रसङ्गादापतितम् । प्रासङ्गिक तद्विचारं परिसमाप्य पादान्तरारम्भे मुण्डकवाक्यशेष एव विचारः प्रवर्त्यते । पूर्वविचारितभागे प्रधानजीवलिङ्गान्यस्पष्टान्यभूवन् । मुण्डके ब्रह्मणः प्रकृतत्वं प्रदर्शितमेव तत्र । ब्रह्मप्रकरणेऽपि मुण्डके बहुधाजायमानत्वनाडीसम्बन्धादिरूपैः स्पष्टजीवलिङ्गैः प्रकरणविच्छेद आशङ्क्य निरस्यते । उदाहृतलिङ्गान्यनन्यथासिद्धजीवलिङ्गानीति पूर्वपक्ष्यभिमानः । आत्मशब्दममृतसेतुत्वमुक्तोपसृप्यत्वादिलिङ्गानि चोदाहृत्य पूर्वपक्ष्यभिमतजीवलिङ्गानि च ब्रह्मणि संयोज्य प्रकरणविच्छेदशङ्का परिहृत्य, प्रकरणस्यानुस्यूतिं सिद्धान्तयति 'प्रकरणात्' इति । मुण्डकप्रकरणपठिता इमे मन्त्रा इति कृत्वाचिन्त-

येदमधिकरणमिति भवदीयवर्णन न न्याय्यम् । ब्रह्मप्रकरणस्य स्पष्टजीवलिङ्गैर्बाधितत्वशङ्कायाः सुवचत्वात् । 'सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदैर्भेदोक्तेश्चैत्यकाण्डे किमिति पुनरिमां पिष्टपेषं पिनष्टि । सत्यं क्षेत्रज्ञधर्मैः पट्टिभिरुपनता प्रक्रियाभेदशङ्काप्र रूयाप्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥' इत्यधिकरणसारावली ॥

'द्युभ्वाद्यायतनं स्वशब्दात्' इति प्रतिज्ञासूत्रम् । पूर्वस्मिन् नये द्युसूर्यवाय्वाकाशवारिपृथिवीनां ब्रह्मशरीरावयवत्वमुक्तम् । अत्र द्युभ्वादेः स एवाधार इत्युच्यते । द्युभ्वादेरत्रापि प्रतीतिरस्ति । आधाराधेयभावे भेद । 'द्य्वाद्यायतनमित्येतावति वक्तव्येऽपि द्युभ्वादीत्युक्तेरय भावः—ऊर्ध्वा अधराश्चेति कोटिद्वयान्तर्गता लोकाः । तत्प्रदर्शनार्थौ द्युभूशब्दाविति' इति श्रुतप्रकाशिका । भवद्ग्रन्थे 'अस्तु द्युभ्वाधार इत्येव कुतो न निर्दिष्टमिति चेदत्राह श्रीसुदर्शनाचार्य— दिवोर्ध्वाण्डकपालान्तस्य, भुवाध. कपालान्तस्य च ग्रहणमिति ग्राहयितुमिति । इदं च जगदीतत्वेन निर्दिष्टमिति भाष्येणैवोपदिष्टम्' इत्युच्यते । श्रुतप्रकाशिकोक्तप्रयोजनस्य स्वारस्यमभ्युपगम्य भवद्भाष्ये पूर्वमेव तद्भाषितमिति भवन्तो वदन्ति । भवतामिदं भाषण न तथ्यम् । 'द्यौश्च भूश्च द्युभुवौ, द्युभुवावादी यस्य तदिदं द्युभ्वादि । यदेतदस्मिन् वाक्ये द्यौ, पृथिवी, अन्तरिक्षं, मनः, प्राणा इत्येवमात्मक जगदीतत्वेन निर्दिष्ट तस्यायतन परं ब्रह्म भवितुमर्हति' इति भवद्भाष्यम् । तत्र सौत्रभूशब्दपठनस्य प्रयोजनं नैव भाषितम् । भामतीकल्पतर्वोरपि नैतदुक्तम् । ''इहापि 'यस्मिन् द्यौ पृथिवी च' इति चकारेण द्युपृथिव्यूर्ध्वाधरलोकानां समुच्चिततया तदर्थप्रत्यभिज्ञानसत्त्वात्' इति न्यायरक्षामणौ श्रीसुदर्शनप्रदर्शितोऽर्थः अनुसृतः । 'यदूर्ध्वं गार्गि दिवः यदर्वाक् पृथिव्या' इति बृहदारण्यकश्रुतिश्चोदाहृता तत्र । उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते, इति दहरवाक्ये द्युभ्वोर्ग्रहणम् ।

पूर्वस्मिन् वैश्वानराधिकरणे द्युवादिस्वन्तानां ग्रहणम् । अत्र द्वितीयमुण्डके 'अधश्चोर्ध्वं च प्रसृतम्' इति विश्वायाम उच्यते । इदं सर्वमनुगुण सौदर्शनप्रदर्शनस्य ॥

अस्त्यन्यदपि स्वारस्यं भुवो ग्रहणे । अस्मिन् प्रथमसूत्रे ब्रह्मणो लीलाविभूतिरुच्यते । अनन्तरसूत्रे 'मुक्तानां परमा गतिः' इति स्मृतस्य ब्रह्मणो मुक्तै प्राप्यत्वस्य सूत्रणेन नित्यविभूतिः सूच्यते । उभयविभूतिनायकत्वम् 'पत्यादिशब्देभ्यः' इति पादान्ते सूत्र्यते । 'यस्मिन् द्यौः' इति मन्त्रादनन्तरो मन्त्रः 'अरा इव रथनाभौ संहता यत्र नाड्यः' इति मन्त्रः । तदनन्तरमन्त्रः 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठित' इति मन्त्रः । तत्र पूर्वार्धे भुवि माहिमानमुक्त्वा, उत्तरार्धे परमव्योमनि दिव्येऽप्राकृते ब्रह्मपुरेऽध्यक्षत्वमुक्तम् । तद्रीत्यनुसारेण प्रथमसूत्रे द्युभ्वादिप्राकृतविभूतिमुक्त्वोत्तरसूत्रे मुक्तानुभाव्यविभूतिं सूचयामीति सूत्रकृदाशयः । प्रथमसूत्रे भुवः स्पष्टपठनेनायमाशयो व्यज्यते । द्युमन्त्रे पृथिवीशब्दः पठितो न भूशब्दः । भूशब्देन तद्घटितमन्त्रग्रहणमपीप्स्यते । मनुष्याधिकारत्वाच्छास्त्रस्य भुवो विशिष्य ग्रहणे स्वारस्यमस्ति ॥

आदिशब्दग्राह्याण्यन्तरिक्षम्, मनः ; सर्वे प्राणाश्च । अम्बरान्तधृतिरक्षराधिकरणे उपन्यसिष्यते । मनःप्राणानामायतनमाधारः शारीरः । शारीरे तेषामोतत्व स्वरसम् । शारीरस्य स्वकर्मोपार्जितं मनइन्द्रियादिकम् । तस्यैव भोगायतनं मनइन्द्रियादिक शरीरमिति प्रसिद्धम् । 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि सयाति वायुर्गन्धानिवाशयात्' इति बहुधा जायमानोऽयं मन प्राणसंबद्धः । 'मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' इति तस्य मनः प्राणादिकर्षणं गीतम् ॥

आयततेऽस्मिन्नित्यायतनम् । आधारे ल्युट् । क्षेत्रज्ञः क्षेत्रे आयतते भोगापवर्गाभ्याम् । तदर्थमेव तस्मै करणकलेबरादिक दीयते । नाब्यन्त-श्रवणम्, बहुधा जायमानत्वं चास्यैवायतनमन्त्रस्यानन्तरमन्त्रे पठ्यते । द्युभ्वादिकमपि जीवानां भोगाय भवेत्; यथा मनःप्राणादिकम् । द्यु-भ्वादीनां कस्मिंश्चिदात्मन्योतत्वं श्रूयते । आदिशब्दग्राह्यमध्ये मनःप्रा-णानां शारीरे ओतत्ववर्णनं स्वरसम् । उत्तरमन्त्रस्य पूर्वार्धे च तस्मिन् स्वरसम् । प्राणानामायतनत्वस्य तस्मिन् स्वरसत्वं द्योत्यते 'प्राणभृच्च' इति सौत्रनिर्देशेन । द्युभ्वन्तरिक्षाणां परमात्मन्योतत्ववर्णनं स्वरसम् । यस्मिन्नित्यायतनत्वं सूच्यते । आयतनत्वं चाधारत्वं वा, भोगानुकूलत्वं वेति विशयः । भोक्तृत्वं निरस्य नियन्तृत्वविशिष्टाधारत्वमुच्यते । 'शारी-रस्य भोक्तुर्भोग्यान् प्रत्यायतनत्वात्' इति शारीरपक्षोपन्यासो भामत्याम् ॥

आधार इत्यनुक्त्वा किमर्थमायतनमिति पठ्यत इति भवता शङ्का-मुद्भाव्यायतनशब्दप्रयोगे स्वारस्यमुपपिपादयिषितम् "अथ द्युभ्वाद्याधार इत्यानिर्दिश्यायतनमिति निर्देशे को हेतुः? अथ को विशेष इति निर्देशे काऽनुपपत्तिरिति चेन्न । यतोऽस्ति विशेष आयतनमिति वेश्मन्येव रूढम्, आधार इति विधारकसामान्ये प्रयुज्यते, यथा 'पठलाधारः स्तम्भः' इति । न तु पटलायतनं स्तम्भ इति स्वरसत इति । .... ..एवं तर्हि शिरसि जटां धत्ते, कटौ पीताम्बरमिति जटाद्याधारतया निर्दिश्यमानं ब्रह्म जटा-दिना रूषितं प्रतीयते । नैवं द्यादिना रूषितमिति प्रतीयेत । न हि गृहं गृहिणा रूषितमिति मतिर्भवति, यथा सुधादिना । यतो गृहं गृहिणं धत्त इत्यप्रत्ययः, तथा चारूषितविचारोऽयम्; न तु पूर्व इव रूषितवि-चार इति गृह्णीतेति स्यात्" इति । नास्य साङ्गत्यगन्धोऽपि । अत्र श्रुतावाधारशब्दो वा, आश्रयशब्दो वा; आयतनशब्दो वा न पठितः । यस्मिन्निति सप्तमीमात्रं श्रूयते । तया चाधिकरणत्वं बोध्यते । ओत-

मिति सन्निकर्षनैरन्तर्यमुच्यते । 'आत्मक्रीडः, आत्मरतिः' इति यस्मि-न्निति निर्दिष्टे आत्मनि तद्विज्ञानवतो विदुषः क्रीडारत्यादिकं फलत्वेन भोगत्वे-न सूच्यते मुण्डकान्ते । 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभि-र्वा' इत्यन्यत्र ब्रह्मणि सञ्चरणे क्रीडादिकं श्राव्यते । 'सुषुप्त्युत्क्रान्त्योर्भे-देन' इति जीवस्य सुषुप्त्याधारत्वमुच्यते ब्रह्मणः । 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इति सूत्रे आत्मशब्दवाच्यपरमात्मनः सुषुप्त्याधारत्वमु-च्यते । सुषुप्त्याधारत्वं च विश्रमस्थानत्वम् । बहिरटाटित्वा दिशं दिशं पतित्वा श्रान्तस्य गृहं विश्रमस्थानं भवति । 'दिशं दिशं पतित्वाऽन्यत्रा-यतनमलब्ध्वा' इति श्रुतौ कुलायगृहादिरूपविश्रमस्थानार्थकत्वे प्रयुक्त आय-तनशब्दः । यः परमात्मा प्राज्ञः सुषुप्तौ प्रजाभूतानस्मान् गाढं परिष्व-ज्यानदयति, स एव मुक्तोपसृप्यः परमानन्दरूपभोगस्यायतनं भवति । आयतनशब्द आधारार्थकः, वेश्मार्थकः, विश्रमस्थानार्थकः, देवतायतना-र्थकश्च । 'वयं त्वय्यायतामहे' इति महावीरचरिते, दशकुमारचरिते च तादर्थ्यान्यकाष्ठोच्यते । 'त्वय्यायत्तं कृषिफलम्—' इति मेघे । ब्रह्मायत्तं सर्वं जगत् । आयतन इव ब्रह्मणि क्रीडा स्वरूपानुकूला ; ब्रह्मणि वि-श्रमः परमसुखम्, ब्रह्मणि वास उचित इत्यादिकं द्योत्यते आयतनशब्देन। नाधारमात्रोक्ताविदं सर्वं लभ्येत । आयतनशब्देनाधेयात् द्युभ्वादेरधिका-यामो द्योत्यते सर्वतः परिबृढस्य आधारस्य । आश्रयशब्देन वा, आ-धारशब्देन वा न तत् द्योत्येत । आयतनशब्दश्च श्रुतिप्रसिद्धः । 'अग्निर्वाऽपामायतनम्' इत्यादिकं श्रूयते । 'आत्मनः प्राणा यथाऽ-यतनं विप्रतिष्ठन्ते' 'अपराजितमायतनम्' इति कौषीतकिनः । 'आय-तनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदाम' इत्यैतरेयाः । ओ-ङ्कारस्य ब्रह्मायतनत्वं श्रूयते ईक्षतिकर्माधिकरणवाक्ये । 'सदायतनाः' इति सद्विद्यायां सर्वस्य ब्रह्मायतनत्वं भूयोऽभ्यस्यते । श्रुत्यनुगममिच्छ-ति सूत्रकृत् ॥

'कामादीतरत्र तत्र चायतनादिभ्यः' इति सूत्रेऽप्येवमेव विषयवाक्यापठित आयतनशब्दः प्रयुज्यते । सूत्रकृदभिमतशब्दः सः । 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते' इति निर्वचनश्लोके सर्वत्र वासुदेवो वसतीति पूर्वपादे निरूपितम् । 'सर्वत्र' इत्युपक्रान्तः पूर्वपादः । 'समस्तं वसति तस्मिन्–' इत्यत्र निरूप्यते । आयतनशब्देन भगवतः सर्वस्यावासरूपगृहत्वं कीर्त्यते । 'सर्वावास वासुदेवम्–' इति वचनमपि स्मर्तव्यम् । अनन्तराधिकरणे 'यन्नित्यं परमानन्दं पूर्णं ब्रह्म सनातनम्' इति वर्णितं पूर्णानन्दत्वं निरूप्यते । यथाऽत्रोक्तः 'अन्या वाचो विमुञ्चथ' इति साधनदशायामात्मेतरविषयादिव्यवहाराभावः, फलदशायाम् 'यत्र नान्यत्पश्यति, नान्यच्छृणोति' इति तत्रोच्यते । ईक्षतिकर्माधिकरणविषयभूतायाः प्रश्नोपनिषदो वासुदेवपरत्वं भाषितं भगवत्पादैस्तद्भाष्ये । अन्यच्च । द्युभ्वादयः प्राणिनां गृहमायतनं मित्यस्मद्बुद्धिः । 'गो अश्वमिह महिमेत्याचक्षते । हस्तिहिरण्यदासभार्याक्षेत्राण्यायतनानि' इति महिमशब्दवाच्यविभूतयो विभूतिमति भगवति प्रतिष्ठिताः । भगवान् स्वेतराप्रतिष्ठितः । 'स्वमहिमप्रतिष्ठितः' इति 'स्वयं दासास्तपस्विनः' इतिवत् स्वाधारक इत्यर्थः । आयतनानामायतनं ब्रह्म आभरणस्याभरणमितिवत् । यथा महति गृहे वयमल्पप्रमाणाः संचरामः, तथा सर्वतः परिबृढेऽनन्तायामे ब्रह्मरूपायतने विश्वमवतिष्ठते । 'गम्भीरत्वात् क्वचन समये गूढनिक्षिप्तविश्वा' इति भगवन्नाभिवर्णनम् ॥

'न हि गृहं' यतो गृहं गृहिणं धत्ते इत्यप्रत्ययः; तथा चारूषितविचारोऽयमिति स्यात्' इति भवदुक्तिर्न सङ्गता । अस्मिन् पादे धरणं भूय उच्यते । 'अम्बरान्तधृते' इत्यक्षराधिकरणे । 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धे' इति दहराधिकरणे । अक्षराधिकरणं भवता निर्गुणपरम् । अत्र शारीरब्रह्मभेद एव भूयः सूच्यते । अस्मिन् प्रथमाधिक-

रण एव तद्भेदः सुदृढमुपपाद्यते 'अतच्छब्दात्' 'प्राणभृच्च' ; 'भेदव्यपदेशात्' 'स्थित्यदनाभ्या च' इति । अनन्तरसूत्रार्थविचारे तत्सूत्रेण भवदभिमताद्वैत भञ्जयति सूत्रकृदित्युपपादयिष्यामः ॥

'रोगायतनमातुरम्' इति प्रयुज्यते । किं रोगिणो न रोगै रूषितत्वम् ? असङ्गस्य ब्रह्मणो न रूषितत्वसम्भवः । यथा पूर्वपादप्रथमाधिकरणे 'अनुपपत्तेस्तु न शारीर' 'कर्मकर्तृव्यपदेशाच्च' 'शब्दविशेषात्' 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात' इति सूत्रितं सगुणपरशाण्डिल्यविद्याविषये, तथैवात्रापि 'नानुमानमतच्छब्दात् प्राणभृच्च' 'मुक्तोपसृप्यव्यपदेशात्' 'भेदव्यपदेशात्' 'स्थित्यदनाभ्या च' इति सूत्र्यते । सूत्रकृद्बुद्ध्या भवदभिमतसगुणनिर्गुणविद्यभेदो नैवास्ति । सर्वत्र जीवेश्वरभेदम् , ईश्वरस्य मुक्तप्राप्यत्वं च सुदृढ सूत्रयति ॥

'स्वशब्दात्' इति हेतोरभिधानश्रुतिरूपप्रथमप्रमाणमात्रपरामर्शकत्वमिति भवदभिप्रायः । स्वशब्दश्चात्रात्मशब्द इति भवदुक्तिः । पूर्वाधिकरणप्रथमसूत्रे आत्मशब्दस्य जीवब्रह्मसाधारण्यमुक्तमिति भवद्भाष्यव्याख्या । "व्यभिचरति ह्यात्मशब्दः प्राणभृति तत्साधारण्ये । न च समभिव्याहारबलादव्यभिचारः ; तथा सति साधारणशब्दविशेषादित्येव वक्तव्यं स्यात् ततः स्वशब्दादिति ब्रुवन्न परेतरसाधारण्यं सहतेऽस्मत्सूत्रकारः । तथा च भाष्यम् 'आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते ; नार्थान्तर परिग्रहे' इति । यथाऽनुमानाद्यर्थान्तर नात्मशब्दार्थः ; एव प्राणभृदपि , तत्त्वेनानात्मत्वात् ; तस्मिन्निवास्मिन्नपि न संयगवकल्पते । कथंचिदवकल्पनं तु व्यतिरेके वारयाम इत्यर्थकम्' इति भवदुक्तिः । शारीरमात्रविषयः पूर्वपक्ष इति वयम् । 'स्वशब्दात्' इति शारीरनिरास इष्यते भवद्भिः । 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' 'आत्मा प्रकरणात्' इति जीवात्मन्यात्मशब्द उत्तरत्र प्रयोक्ष्यते सूत्रकृता । अत्र ब्रह्मण्येक-

स्मिन्नसाधारणव्यपदेशत्वे साधिते उत्तरत्र जीवे प्रयोगेन विरोधो नियतः । आत्मशब्द उभयत्र प्रसिद्धः । शबलवाच्यात्मशब्दो भवन्मते । शरीर-प्रतिसम्बन्धिन्यात्मशब्दो भूयः प्रयुज्यते । 'तत्त्वेनानात्मत्वात्' इति शारी-रस्यानात्मत्ववर्णनमयुक्तम् । तत्त्वत. स आत्मैव सूत्रकृद्बुद्ध्या ; वेदान्त-बुद्ध्या च । आत्मा स ईश्वरमुद्दिश्य शरीरमपि भवति । ईश्वरस्तस्या प्यात्मा भवति । ईश्वरः सर्वेषामात्मा । स्वं शरीरं प्रति जीव आत्मा । निरुपाधिकमात्मत्वम् , परमात्मन एव । सर्वात्मत्वं तस्यैव । यद्यप्या-त्मशब्दो जीवपरयो रूढः , योगार्थपौष्कल्यं परमात्मन्येव । रूढिर्योगार्थ-पौष्कल्यमित्युभयमस्ति परमात्मनि । योगरूढ्युभयस्वारस्यं तस्मिन्नेव । एवमेवात्मशब्दस्य ब्रह्मशब्दत्वं वर्णनीयम् । इदं चास्माकमिष्टमेव ॥

स्वशब्दस्य 'परब्रह्मासाधारणशब्दात्' इति व्याख्यानं दृश्यते श्रीभाष्ये । आत्मशब्दश्च निरुपाधिकः परस्मिन्नेव मुख्यवृत्त इत्यत्र श्रीभा-ष्यम् । 'आप्नोतीति ह्यात्मा । स्वेतरसमस्तनियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति' इति श्रीभाष्यम् । 'आत्मशब्दो न व्याप्तृमात्रवाची । किं तु व्याप्तृविशेषवाची, योगरूढत्वात्' इति श्रुतप्रकाशिका । 'अस्त्येतत्पूर्वमिव साधारणशब्द इत्युपवर्ण्य कथमिदानीं स्वशब्द इति वर्णयसीति चेत् , तदानीमासमुपासक. ; इदानीं त्वस्मि निर्धूतनिखिलद्वैतमतिरिति गृहाण, इति निरङ्कुशा विचित्रा भवदुक्ति. । शरीरप्रतिसम्बन्धिबोधकस्य , शब-लवाचित्वेन भवन्मतसम्प्रतिपन्नस्यात्मशब्दस्य प्रयोगस्तद्धेतूकरणं चाद्वैताभि-भिमति निष्करुण निरस्यति । द्युभ्वाद्यायतनत्वेन ब्रह्मणो वर्णनम् , प्रधानस्य तदायतनत्वनिषेध , प्राणभृतो ब्रह्मभेद , ब्रह्मणो मुक्तप्राप्यत्वं चाभेदसाधकमिति नानुन्मत्तो ब्रूयात् । भेदनिर्धारणमेवाभेदसाधक कथं भवेत् ? किं द्वैपायनकृष्णेन स्वनामद्रोहिणे भवत एवमुपादेशि रहसि । 'आलोड्य सर्वशास्त्राणि विचार्य च पुन पुन । इदमेकं सुनिष्पन्नं ध्येयो

नारायणः सदा' इति सदा नारायणध्यानं कर्तव्यमिति निर्धारितं तेन । सदा नारायणध्यानस्य फलं 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति श्राव्यते । अत्रापि फलाध्यायारम्भे 'आवृत्तिरसकृत्' इत्युपासनं साधनत्वेन सूत्रयित्वा तस्य यावदायुषमावर्तनं विधत्ते 'आ प्रयाणात्तत्रापि हि दृष्टम्' इति । वेदनस्योपासनपर्यायत्वं भाषितं भाष्यद्वयेऽपि । उपासनस्य यावदायुषमविरतिरेवापदिश्यते सूत्रकृता । तद्विरोधेन 'पूर्वाधिकरणनिर्माणक्षणेऽहमुपासकः इदानीं नाहमुपासकः' इति वक्ति सूत्रकृदिति भवदुक्तिं को वाऽनुमोदेत ॥

सगुणोपासको निर्गुणवेदिता वा भवतु । तावता आत्मशब्दस्य शक्तिं कथमन्यथाकर्तुं शक्येत ? किं निर्गुणब्रह्मविप्रयुक्तहेतोराभासत्वं सह्यम् ? ॥

"एवं स्थितेऽमृतस्यैष सेतुरिति परस्य ब्रह्मणोऽसाधारणः शब्दः । आत्मशब्दश्चाप्नोतीति परस्मिन् मुख्यवृत्तः सर्वज्ञ इति वक्ष्यमाणश्चेति स्वशब्दादिति व्याख्यानं सम्यग्विमृशन्तु विमर्शकाः । अत एव 'यदाप्नोति यदादत्ते यच्चात्ति विषयान् बहून् । यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते ॥' तत्र प्रथमं तावत्सामान्यात्त्विति गौणमिष्यति ब्रह्मणि सेतुशब्दम् । स यदि तस्य स्वशब्दः स्यादग्निशब्दोऽपि माणवकस्य कुतस्तथा न स्यात्? आत्मशब्दोऽपि जीवेश्वरसाधारणः कथमाप्तिबलाद्ब्रह्मणि मुख्यवृत्तः स्यात् ? अदनबलाज्जीव एव कुतस्तथा न स्यात् ? 'सर्वज्ञशब्दोऽप्यतच्छब्दग्राह्योऽत्र न ग्राह्य इति स्वशब्द एवात्र दुर्लभः परेषामिति' इति भवदुक्तिः । स्वशब्दात् इत्यस्य शब्दरूपश्रुतित्वमात्रार्थकत्वं वयं न ब्रूमः । अभिधावृत्त्यैकपदसामर्थ्यमात्रग्राह्यत्वं वयं न ब्रूमः । एकेन शब्देन वा, अनेकैः शब्दैर्वा ब्रह्मबोधकाः सर्वेऽपि ग्राह्याः । आत्मशब्द एक एव ब्रह्मवाचको भवति । सेतुशब्दमात्रस्य ब्रह्मशब्दत्वं नोक्तमस्माभिः । 'अमृतस्यैष सेतु-

रिति परस्य ब्रह्मणोऽसाधारणः शब्द. । . . अमृतस्य प्रापक इत्यर्थः । संसारार्णवपारभूतस्यैव प्रतिलम्भक इत्यर्थ.' इति श्रीभाष्यम् । 'अमृतस्य सेतु' इति शब्दद्वयस्य ब्रह्मण्यसाधारणत्वेन प्रसिद्धिर्भाषिता। सेतुशब्दस्य ब्रह्मणि शक्तिर्न भाषिता तत्र । सेतुशब्दस्यात्र ब्रह्मणि गौणत्वमेव । सेतुरिव वा सेतुः इति श्रीभाष्ये सेतुशब्दस्य ब्रह्मण्युपचरितत्वमेवात्र भाषितम् । 'सामान्यात्तु' इति गौणत्वमेव सूत्रित सेतुशब्दस्य । 'सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते। अत. सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते' इति तत्सूत्रे भगवत्पादभाष्यम् । सेतुरिवेति सेतुसादृश्यात् कूलप्रतिलम्भकत्वं वा भवतु । 'षिञ् बन्धने' इति विधरणार्थत्वं वा भवतु । उभयथाऽपि 'अमृतस्य सेतु.' इति समभिव्याहृतशब्दयोर्ब्रह्मासाधारणशब्दत्वं सुवचमेव । इदं च भवद्भाष्यभामतीसम्मतम् । 'तदिदमुक्त भाष्यकृता—अमृतत्वसाधनत्वादिति । तथा चामृतस्येति, सेतुरिति च ब्रह्मणि द्युभ्वाद्यायतने उपपत्स्येते' इति भामती । 'अमृतस्येति षष्ठी च ब्रह्मपक्षे भावार्थस्वीकारात्' इत्यत्रानंदगिरिणा अमृतत्वस्य साधनमित्यर्थ उक्त. । एवं च 'अमृतस्य सेतु' इति पदयो' सौत्रस्वशब्दहेतुग्राह्यत्वं मतद्वयसम्मतम् । इदमविदित्वा दूषण प्रयुज्यते भवद्भिः ॥

अग्निमाणवकवृत्तान्तकथनं विषममेव । सेतुशब्दस्य ब्रह्मणि मुख्यत्वस्याभाषितत्वात् ; 'अमृतस्य सेतु' इत्यस्य स्वशब्दत्वस्योभयसंमतत्वाच्च ; सेतुशब्दस्य गौणत्वस्य स्पष्ट भाषितत्वाच्च । अमृतसेतुत्वस्य भवद्भाष्यादिष्वपि ब्रह्मशब्दत्वोक्त्या शब्दशब्दस्य नैकपदश्रुतिमात्रपरत्व भवन्मतेऽपीति स्पष्टम् । उदाहृताधिकरणसारावलीश्लोके 'प्रक्रियाभेदशङ्का शब्दपूर्वैरुन्मूल्यते' इत्युक्तम् । शब्दपूर्वैरित्यस्य 'श्रुत्यादिभि प्रमाणैः' इति चिन्तामणिव्याख्या । काममुदाह्रियता ब्रह्मश्रुतिः पुरुषश्रुतिश्च । परशब्दश्चोदाह्रियताम् । इष्टमेव तदस्माकम् । सर्वज्ञ इत्यादिशब्दा ब्रह्मण.

स्वशब्दा एव । न तन्मन्त्रस्य 'अतच्छब्दात्' इति हेतुना ग्रहणम् । 'तच्छब्दाभावात्' इति तत्सूत्रस्य प्रधानादिवाचकशब्दाभावमात्रपरत्वात् ॥

'स्वशब्दस्य सदायतनाः सत्प्रतिष्ठा इति सद्विद्यावाक्यविषयत्वं चायुक्तम् , अपक्षधर्मत्वात् । सद्विद्यावाक्यं हि नात्र श्रूयते । इह तदैकार्थ्यं हेतुतया विवक्षितमिति चेत् , तर्हि विगीतस्य हेतुतयोपन्यासो न घटते । द्युपृथिव्यादिप्रतिपादकवाक्यस्य परमात्मप्रतिपादकवाक्यान्तरैकार्थ्यं हि पूर्वपक्षिणो विमतिपदम् । ' इति श्रुतप्रकाशिकोक्तं साध्वेव । 'क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा ' इति भवद्भाष्यम् । कोऽत्र पक्षः ? 'यस्मिन् द्यौः' इति वाक्ये सप्तम्या सूचितमात्मशब्दवाच्यमाधिकरणं पक्षः । पक्षघटकश्रुतिवाक्ये आयतनशब्दो न श्रूयते । नापि सच्छब्दस्तत्र श्रूयते । सद्विद्यावाक्यस्य वायतनत्वस्य वाऽत्र स्वशब्दत्वकथनं नैव सङ्गतम् । यद्यपि सूत्रपठितायतनशब्दस्तत्र ब्रह्मविषये स्वयं साक्षात्पठ्यते , न तच्छब्दो मुण्डकवाक्यपठितः । तस्मान्न हेतोः पक्षवृत्तित्वमिति पक्षधर्मताविरहदूषणं दुष्परिहरमेव । ''अत्र च 'स्वशब्दात् इति तन्त्रोच्चरित' आत्मशब्दात् इति, सदायतना इति, सच्छब्दादिति ; ब्रह्मशब्दादिति च सूचयति । सर्वे ह्येतेऽस्य स्वशब्दाः '' इति भामत्यां भाष्यव्याख्याप्यचतुरैव । 'सच्छब्दात्' इति हेतुः स्वरूपासिद्धः । न मुण्डकवाक्ये सच्छब्दः पठ्यते । कृत्स्ने मुण्डके 'यथा सतः पुरुषात्केशलोमानि' इत्येकत्रैव सच्छब्दः पठ्यते । तत्र च शारीरविषय एव पठनम् । तदपि 'यस्मिन् द्यौः' इति वाक्यात्पूर्वम् । 'सदायतनाः' इत्यपि न हेतुः पक्षवर्ती भवेत् । अस्मदुक्तदोषस्य दुष्परिहरतां मत्वैव न्यायरक्षामणौ भवद्भाष्यवर्णितादन्येन प्रकारेण सद्विद्यावाक्यस्यात्रोपयोगो न्यदर्शि ''ननु द्य्वाद्याधार इति लघुनि सूत्रे कर्तुं शक्ये द्युपृथिव्यादिनिर्देशेनायतनशब्दप्रयोगेण च

किमर्थं गुरु सूत्र कृतम्? उच्यते । श्रुत्यन्तरे ब्रह्म स्वशब्देनैवायतनं श्रूयते 'सदायतनाः सत्प्रतिष्ठा' इति । इहापि मन्त्रे यस्मिन्निति निर्दिष्ट द्युपृथिव्यादीनामोतत्ववचनादायतनमवगम्यते । तथा च श्रुत्यन्तराम्नातायतनशब्दरूपब्रह्मपरशब्दपरामर्शापेक्षायतनत्वप्रत्यभिज्ञानादपि द्युभ्वाद्यायतनं ब्रह्मेति सिद्धान्तयुक्त्यन्तरद्योतनार्थमायतनशब्दः । अस्यां युक्तौ 'स्वशब्दात्' इति ल्यब्लोपे पञ्चमी । तथा च श्रुत्यन्तरगतमायतनशब्दरूपं ब्रह्मशब्दं परामृश्य तदुन्मेषितादायतनत्वप्रत्यभिज्ञानात् द्युभ्वाद्यायतन ब्रह्म प्रतिपत्तव्यमिति सूत्रार्थो ग्राह्य.' इति । अस्य प्रकारस्य क्लिष्टतरता स्पष्टा । 'सौत्रस्वपदेन प्रथमं सौत्रायतनशब्दार्थपरामर्शः । आयतनस्य ब्रह्मण आयतनशब्दः स्वशब्दः । स च सता ब्रह्मणा सामानाधिकरण्येन पठितः 'सदायतनाः' इति समस्तपदे । ब्रह्मवाचिसत्पदेन छान्दोग्ये ब्रह्मण आयतनत्वश्रुतेरत्रापि तथेत्यर्थः' इति रत्नप्रभा । 'स्वस्यायतनस्य असाधारणायतनशब्दात् इति योजनान्तरं मत्वा श्रुतिमाह सदायतनाः इति' इत्यानन्दगिरिः । यस्मिन्निति वाक्ये आयतनशब्दापठनादनयोर्वैयधिकरण्यं स्फुटम् ।

प्रथमसूत्रे हेतुना यस्मिन्निति मन्त्रदृष्टशब्दमात्रपरामर्श इति श्रीभाष्यकारहृदयम् । ब्रह्मशब्द उत्तरत्र दूरे सङ्कीर्त्यते, यद्यपि सोऽपि द्युभ्वाद्यायतनविषय एव । अत 'आत्मशब्द.', अमृतस्य सेतुः' इति शब्दश्च स्वशब्दहेतुपरामृष्टत्वेन भाषितौ ॥

स्वशब्दहेतुना रूढ्यर्थमात्रविवक्षायामात्मशब्दो न जीवं व्यवच्छिन्द्यात् । एतदुत्तरे दहराधिकरणे भाषितं भगवत्पादैः 'यद्यप्यात्मशब्दो जीवे सम्भवति ; तथाऽपीतरेभ्यः कारणेभ्यो जीवाशङ्का निवर्तिता भवति' इति । योगरूढत्वमाश्रित्य योगार्थपौष्कल्यस्य जीवेऽसम्भवाद्योगरूढत्वस्य ब्रह्मणि मुख्यत· सम्भवाद्धेतुत्वमुपपादनीयम् ॥

मनःप्राणायतनं जीवो भवितुमर्हतीति प्राप्ते उपक्रमश्रुतद्युभ्वन्तरि-

क्षाणामायतनत्वं ब्रह्मणि स्वरसमिति सिद्धान्ती । द्युप्रभृतीनां सर्वेषामायतनत्वेन श्रुतः पक्षः । द्युभ्वाद्यायतनमित्युक्तस्य पक्षशब्दस्योभयविषयसंशयोत्थापकत्वमस्ति ॥

"नन्वत्र कथं प्रधानपक्ष सङ्गच्छते ? कुतः ? पारवत्त्वसामान्यादत्र सेतुशब्देन प्रधानमादाय धारणेन समाधाने सामान्यात्त्वित्यत्र कृतकरतापत्तेरिति चेन्न, हृदयाग्रहणात् । न कथञ्चिदपि गृहीतं हृदय सूत्रकारादीनां भवता । तथा हि पारवान् हि लोके सेतुः प्रख्यातः ? न बन्धनहेतुमात्र हडिनिगडादिष्वपि प्रयोगप्रसङ्गात् । पारवत्त्वं च प्रधानस्य भवति ; न ब्रह्मण इत्येतदनूद्य समादधाति 'नानुमानमतच्छब्दात्' इति न विधरणादिति । कुत. ? स्वशब्दप्रस्तावे ब्रह्मणि गौणशब्दव्यवस्थापनस्यानवसरात्, प्रतिज्ञाभङ्गप्रसङ्गाच्च, अहो नानुमानमिति निराकरणमेव चिकीर्षितं सूत्रकारस्य । एवं निराकृत सेतुशब्दे, न प्रमाणमित्युक्तं भवता अधस्तात् । ततो ब्रह्मेति भवति । ततः परमतो भवतीत्युत्तराक्षेपे 'सामान्यात्तु' इति वदिष्यतीति सुश्लिष्ट तत्र कुतः कृतकरता नामेति' इति भवदुक्तिरत्यन्तासङ्गता, स्वव्याघातिका, सूत्राणां भवद्भाष्यादिग्रन्थाना श्रुतप्रकाशिकाग्रन्थाक्षेपस्य चाज्ञानमूला च ॥

तथा हि– 'इह कैश्चिदेवं पूर्वपक्षितम् । द्युभ्वाद्यायतनस्य सेतुत्वश्रवणात्, सेतोश्च पारवत्त्वेन, परस्य चानन्तमपारमित्यपारत्वश्रवणात् द्युभ्वाद्यायतनं प्रधान वायुर्वा, जीवो वा भवेत् । एषां धारकत्वयोगादिति । तदयुक्तम् । पारवत्त्वार्थोपस्थापकस्य सेतुत्वव्यपदेशस्य पूर्वपक्षहेतुत्वेनास्मिन्नधिकरणे परिहृतत्वे सत्युत्तरत्र परमतः सेतून्मानेत्यधिकरणे सेतुत्वव्यपदेशस्य पूर्वपक्षहेतुत्वेनोपन्यासायोगात् । न हि परिहृतस्य हेतोः पुनः परिहारो न्याय्यः कृतकरत्वापत्तेः । अत्र सेतोः परिच्छिन्नत्वं पूर्वपक्षशङ्काबीजम्, तत्र कूलान्तरप्रापकत्वमिति मुखभेदोऽस्तीति चेन्न । कू-

लान्तरप्रापकत्व च सेतो कूलावधिकत्वनिबन्धनमिति परिच्छिन्नत्वे परिहृते तस्यापि परिहृतत्वात् , परिहारहेतुसाम्याच्च । विवरणार्थतयैव ह्युभयत्र परिहार । अत उत्तरत्र पूर्वपक्षबीजतयोपन्यासान्यथाऽनुपपत्त्याऽस्मिन्नधिकरणे सेतुत्वव्यपदेश सूत्रकारेण न पूर्वपक्षबीजतया विवक्षित ।' इति श्रुतप्रकाशिका ॥

पराधिकरणे सेतो पारवत्त्वनियमदर्शनमेव पूर्वपक्षबीजमिति स्फुट सूत्राक्षरेभ्य । न तत्र प्रधान ब्रह्मणोऽपि परमित शङ्का भवन्मते वा , अस्मन्मते वा । ब्रह्मणोऽपि परमुत्कृष्ट प्राप्य किञ्चित्स्यादुक्तहेतुभ्य इति तत्र शङ्का । अमृतस्य सेतुरिति ब्रह्म असाधारण्येनाभिधीयत इत्यत्र सिद्धान्तहेतु । ब्रह्मण स्वशब्द स इति हेतु । 'सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति , "सेतुं तीर्त्वा' इति च तरतिशब्दप्रयोगात् । यथा लौकिक सेतुं तीर्त्वा जाङ्गलमसेतु प्राप्नोति, एवमात्मान सेतु तीर्त्वाऽनात्मानमसेतुं प्राप्नोतीति गम्यते" इति पराधिकरणे भवद्भाष्यम् । पारवत्त्वमेव तत्र पूर्वपक्षबीजत्वेन भाषितमिति स्पष्टम् । सेतुना सेतोरन्यत्पर पार प्राप्यम् । 'सेतुशब्दस्य लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोऽन्यत्प्राप्यमस्तीति गम्यते । तथा एत सेतुं तीर्त्वेति तरितव्यता चाभिधीयते । अतश्चान्यत्प्राप्यमस्ति' इति श्रीभाष्येऽपि पारवत्त्वमेव तत्र पूर्वपक्षबीजत्वेनोपन्यस्तम् । अस्मिन् द्युभ्वाद्यधिकरणे सूत्रकारहृदयाभिज्ञमन्या भवन्त पारवत्त्वमादाय प्रधानपूर्वपक्षो नानुमानमतच्छब्दादिति निरस्यत इति वदन्ति । पारवत्त्वस्यपशङ्काबीजस्यात्र निरासे तच्छङ्कामादाय पुन सेतुव्यपदेशनिमित्त आक्षेपो न सङ्गच्छत । अत्र न सेतुशब्दमात्रमस्ति ; किं तु 'अमृतस्य सेतु ' इति भावार्थकतया संप्रतिपन्नेनामृतशब्देन सबद्ध सेतुशब्द: श्राव्यते । 'अथ य आत्मा स सेतुर्विधृति ' 'एत सेतु तीर्त्वा' इति केवलसेतुशब्दबद्धवाक्या-

न्येवोदाह्रियन्ते पराधिकरणे सौत्रसेतुपदपरामृष्टत्वेन भवद्भाष्ये, अस्मद्भाष्ये च । 'अमृतस्यैष सेतुः' इति मुण्डकवाक्यं नैवोदाहृतं भवद्भाष्ये तदधिकरणे । अस्मद्भाष्ये "संबन्धव्यपदेशोदाहरणत्वेनैव मुण्डकमन्त्रोदाहरणं कृतम् । 'तथा संबन्धव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते' 'अमृतस्य परं सेतुम्' 'अमृतस्यैष सेतुः' इति । इयं च शङ्का 'उपपत्तेश्च' इति सूत्रेण परिह्रियत इति वयम् । 'यदुक्तममृतस्यैष सेतुरिति प्राप्यप्रापकसंबन्धव्यपदेशात्प्रापकादन्यत्प्राप्यमस्तीति, तन्न । प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः । 'नायमात्मा... यमेवैष वृणुते तेन लभ्य इत्यनन्योपायत्वश्रवणात्' इति तत्र श्रीभाष्यम् । 'स्वस्ति वः पाराय तमसः परस्तात्' इति ब्रह्मणः पारत्वं तत्रैव मुण्डकेऽव्यवहितानन्तरमन्त्रे निगद्यत इत्यपि तच्छङ्कानिरासः । 'अमृतस्य सेतुः' इति समभिव्याहारान्मुण्डकमन्त्रे सेतुशब्दमात्रात्पूर्वपक्षोत्थितिवर्णनं न न्याय्यम् । "अमृतस्यैष सेतुः' इति श्रवणात्" इति भवद्भाष्यं अत्र । 'न चामृतं सद्ब्रह्मामृतस्य सेतुरिति युज्यते । न च ब्रह्मणोऽन्यदमृतमस्ति, यस्य तत्सेतुः स्यात् । न चाभेदे षष्ठ्याः प्रयोगो दृष्टपूर्वः । तदिदमुक्तममृतस्यैष सेतुरिति श्रवणादिति । अमृतस्येति श्रवणात्, सेतुरिति च श्रवणादिति योजना' इति भामतीव्याख्या । इयं चामृतसेत्वोः संबन्धव्यपदेशशङ्का अस्मद्भाष्ये पराधिकरणे संबन्धव्यपदेशहेतुना प्रथमसूत्र उद्भाव्य 'उपपत्तेश्च' इति पञ्चमसूत्रे परिह्रियते ॥

"पारवत्त्वेन सेतुत्वाद्भेदे षष्ठ्याः प्रयोगतः । द्युभ्वाद्यायतनं युक्तं नामृतं ब्रह्म कर्हिचित् ॥ पारावारमध्यपाती हि सेतुः, ताभ्यामवच्छिद्यमानो जलविधारको लोके दृष्टः ; न तु बन्धनहेतुमात्रम् । न चानवच्छिन्नं ब्रह्म सेतुभावमनुभवति" इति भामत्यां पूर्वपक्षः । 'यत्तूक्तं सेतुश्रुतेः, सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति ।

अत्रोच्यते । विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते, न पारवत्त्वादि । न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते । सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव, न पारवत्त्वादि । षिञो बन्धनकर्मण सेतुशब्दव्युत्पत्तेः' इति सिद्धान्तभाष्यम् । 'कुत स्वशब्दात् । धारणाद्वाऽमृतत्वस्य भाधनाद्वाऽस्य सेतुता । पूर्वपक्षेऽपि मुख्यार्थः सेतुशब्दो हि नेष्यते ॥' पूर्वपक्षेऽपि पारवत्तामात्रपरो लाक्षणिकः सेतुशब्दोऽभ्युपेयः। सोऽस्माकं पारवत्तावर्जं विधरणत्वमात्रेण योगमात्रात् रूढिं परित्यज्य प्रवर्त्स्यति' इति सिद्धान्तभामती, 'विधारकत्वमेव सेतुगुणोऽपि स्यात् । तथा च पारवत्तया गौणीवृत्त्या रूढ्यत्यागेन प्रवृत्तौ योगमात्राद्धलिनीति च न शङ्कयमिति' इति कल्पतरुश्च विधरणत्वरूपसेतुसामान्यधर्मस्फोरणमेव पारवत्त्वार्थपूर्वपक्षनिरासकयुक्तिर्भवन्मत इति स्पष्टीकुरुतः । 'विधरणात्' इति सिद्धान्तहेतुर्न प्रदर्शितो भवन्मत इति भवच्छपथनं मृषैव । पौनरुक्त्यदोषस्यापरिहरणीयतया भवताऽयं मृषावाद आश्रयणीयो भवति । यथा 'सामान्यात्तु' इति पराधिकरणे शङ्कानिरासकहेतुः सूत्र्यते न तथेह केनचित्सूत्रेणैतच्छङ्कानिरासः क्रियते । अतो नैतच्छङ्का सूत्रकारबुद्ध्या पूर्वपक्षबीजमिति सुदृढं निश्चीयते ॥

भवद्भाष्यार्थो यथा गृहीतो भामतीकल्पतर्वादिषु तथैव गृहीतः श्रीमत्सुदर्शनसूरिभिः । न तेषु केषाचिदपि मनागपि मुग्धता । भवन्त एवात्र मोहे प्लवन्ते । 'सुखावबोधार्थमस्माकम्, व्यामोहार्थं च युष्माकमेवमुत्सूत्रमेवोक्तम्' इति भवदुक्तिर्भवतां बुद्धेर्मुसलकिसलयपर्वतां व्यनक्ति । प्रसादरूपगुण एवेष्टव्यो ग्रन्थकर्त्रा । प्रसादश्च सर्वेषां पठितॄणां सुबोधता । भामतीकल्पतरुकृदादयो भवदीयाः पण्डितसार्वभौमाः श्रीमत्सुदर्शनसूरिवदेव भाष्यार्थं निरणैषुः । यदि तेषां भवदीयानां मोहः, अस्त्वस्माकमपि स भवद्भाष्यार्थविषये । वस्तुतस्तु—भवतामेव महान् मोहः । सिद्धा-

न्तप्रधानयुक्तेरुत्सूत्रत्वाभ्युपगमेऽधिकरणपूर्वपक्षस्तथैव तिष्ठेत् । उत्सूत्रत्वाभ्युपगमेनासिद्धाधिकरणे सेतुत्वप्रयुक्तशङ्का नैव परिह्रियते भवन्मते इत्येवोक्तं भवति । तथा चास्माकं पन्थानमेव भवन्त आगता भवन्ति । पारत्र्त्वशङ्कावर्णनस्याप्युत्सूत्रत्वं भवता वर्णनीयम् । इतरथा तस्य पुन पराधिकरणे वर्णनेन पौनरुक्त्यदोष स्यादेव । तथा च सेतुत्वप्रयुक्तशङ्का वा, तत्परिहारो वा नात्र विवक्ष्यते भवद्भाष्यकारैरिति भवताऽभ्युपगन्तव्यं भवति । एवमभ्युपगते न विवादस्यावकाश । विधरणत्वमत्र सिद्धान्तपरिहारार्थत्वेन नाश्रितमिति भवन्त । कल्पतरुकृत्तु 'द्युभ्वाद्यधिकरणे हि सेतुशब्दस्य पूर्वपक्षेऽप्यमुख्यार्थ-वाद्विधरणत्वार्थ आश्रित' इति वदति ॥

'कथमन्यथा प्रधानं परित्यजेयुर्भवन्त ? अहह ! अनुक्तमपि सूत्रेण कथंचिल्लब्धावकाशमाभिप्रायिकतयाऽनुषञ्जनीयमिति स्थिते, उक्तमपि स्फुटं परित्यजतेति विचित्रमेतत्' इति भवता प्रधानपूर्वपक्षप्रदर्शननिर्बन्धरुचिरसमीचीना । यस्मिन्निति मन्त्रे यस्मिन्निति निर्दिष्ट द्युभ्वाद्यधिकरणमात्मत्वेन, अन्यविमोकपूर्वकमेकज्ञेयत्वेन, अमृतसेतुत्वेन मुक्तोपसृप्यत्वेन ईशत्वेन अमृतत्वेन च स्पष्टं श्रूयते । 'आत्मशब्दात्' 'तन्निष्ठस्य मोक्षोपदेशात्' 'हेयत्वावचनाच्च' इतीक्षत्यधिकरणप्रदर्शितहेतुभि प्रधानशङ्का दूरोत्सारितैव । अतो जीव एवात्र शङ्कितुमर्हं । द्युभ्वादीनामायतनत्वेन निगदन जीवभोगार्थत्वरूपोपपत्तिमपि स्फोरयति जीवपूर्वपक्षप्रापणाय ॥

'नानुमानमतच्छब्दात्' इत्युक्तातच्छब्दहेतौ 'प्रधानवाचकशब्दाभावात्' इत्यर्थो भवद्भाष्यममत । 'तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्द । न तच्छब्दोऽतच्छब्द । न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादक कश्चिच्छब्दोऽस्ति । येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वावगम्येत' इति भवद्भाष्यमत्र प्रधानप्रतिपादकशब्दाभावमेव भाषते । तत्प्रापकशब्दाभावे, तल्लिङ्गाभावे, तद्विरुद्धशब्दलिङ्गेषु सत्सु तद्विषयपूर्वपक्षो-

स्थान को वा भाषेत ? तत्परित्यक्तनस्मान् पण्डितः को वा दूषयेत् ? ॥

'नानुमानमतच्छब्दात् प्राणभृच्च' इति सूत्रे प्रधानोपन्यासो दृष्टान्तत्वेनैव यथा 'नत्वेवाहम्—' इति गीताश्लोके भगवन्नित्यत्वोपन्यास । अस्मद्भाष्यप्रदर्शितदृष्टान्तरीत्युपन्यासस्वारस्यापहृता भवन्तोऽप्यत्र वदन्ति 'यथाऽनुमानाद्यर्थान्तरं नात्मशब्दार्थ एवं प्राणभृदपि' इति । प्रधानादिपूर्वपक्षे न पूर्वपक्षिणा विश्रम इति स्पष्ट भामतीग्रन्थात् । प्रधानपूर्वपक्षमुपन्यस्य, तदनन्तरमुक्त तत्र 'यदि त्वास्मिन् प्रमाणाभावेन न परितुष्यसि, अस्तु तर्हि नामरूपबीजशक्तिमदव्याकृतम् । यदि त्वात्मशब्दाभिधेयत्व न विद्यत इति न परितुष्यसि, भवतु तर्हि शारीर, तस्य भोक्तुर्भोग्यान् द्युप्रभृतीन् प्रत्यायतनत्वात्' इति । आत्मशब्दश्रवणेन प्रधानवाय्वादिपूर्वपक्षस्यानवकाश इति तत स्पष्टम् ॥

किं च भवन्मतरीत्याऽपि प्रथमसूत्रमात्मसद्भ्रमादिशब्दबलेन जीवात्मव्यवच्छेदनपरम् । द्वितीयसूत्रोक्तं मुक्तोपसृप्यत्व शारीरं व्यावर्तयति । मुक्ता शारीरास्तं प्राप्नुवन्तीति हि तत्सूत्रार्थ । 'भेदव्यपदेशात्' 'प्रकरणात्' 'स्थित्यदनाभ्यां च' इति सूत्राणां प्राणभृन्निरासकत्वं स्पष्ट भाषितम् । 'कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्य' इत्येव तानि त्रीणि सूत्राणि प्रत्येकमवतारितानि भवद्भाष्ये । प्राणभृन्मात्र तेषामन्वयार्थं पृथग्योगकरणं कृतमिति खलु भवन्मतम् । 'नानुमानमतच्छब्दात्' 'प्राणभृच्च' इत्येवावशिष्यते । तत्रापि 'प्रधानवाचकशब्दाभावात्' इत्येव प्रथममर्थो भाषित । मुक्तोपसृप्यत्वसूत्रानन्तर पठितम् 'नानुमानम्' इति । तत्सूत्र मुक्तोपसृप्यत्वहेतुपठनानन्तर प्रधानशङ्का नोदेतुमर्हति । 'मुक्तोपसृप्यत्वेऽभिहिते प्रधानशङ्कानुदयेन तस्य व्युदसनीयत्वाभावात्तदुपन्यासो दृष्टान्ततयेति भाव' इति श्रुतप्रकाशिका । पूर्वमनन्तरं च भूयस्सु सूत्रेषु प्राणभृदेव निरस्यत इति स्पष्टत्वात् मध्ये प्रधानोपन्यासो दृष्टान्तत्वे-

नेत्येवाश्रयणं न्याय्यम् ॥

प्रधानपूर्वपक्षबीजस्यात्यन्ताभावे स्पष्टं दृष्टान्ततयोपन्यासपरत्वेन स्वरस व्याख्येये सूत्रे निर्बीज प्रधानपूर्वपक्षरचनारोपणेन अचतुरत्वमेवापादितं भवेत् ॥

"किं चादृश्यत्वाधिकरणे स्मृत्युक्तादृश्यत्वादिद्योतनार्थं स्मार्तमिति, अत्र स्वशब्दविचारे नास्ति वेदे स्वशब्दः प्रधानस्य, यतोऽनुमानमिति द्योतनायानुमानमिति च ग्रथिनमपि न प्रधानं निराकृतमिति ब्रुवन्तः किं न ब्रूयुर्भवन्तः तदपि निराकार्थमित्यक्षराधिकरणे वदन्तः, तत सिद्धेन साध्यस्य व्यपदेश इति व्यपदेशमात्र एव भवताम्" इति भवदुक्तिरतिविचित्रा । अदृश्यत्वाधिकरणे 'न च स्मार्तम्' इति न सूत्रितम् । यथा भवद्ग्रन्थे प्रमादेनोच्यते । अन्तर्याम्यधिकरणे 'न च स्मार्तम्' इति सूत्रेऽपि स्मार्तस्य प्रधानस्य दृष्टान्ततयैवोपन्यास इति तत्र प्रदर्शितम् । तत्र प्रथमवाक्ये 'यं पृथिवी न वेद' इति यद्यपि रूपादिविहीन प्रधान प्रतिपत्तु शक्यम्; तथाऽपि 'यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' इति तत्रैव पठितत्वात्; प्रधानशङ्काया अनुदय एव । आत्मत्वं प्रधानेऽसम्भावितमिति व्युत्पादितमीक्षत्यधिकरणे । अतस्तत्र प्रधानशङ्कावर्णनस्यानवकाश एव । अनुमानमिति वा, आनुमानमिति वा नामकरणेनात्र प्रधानपूर्वपक्षोऽभिप्रेयते सूत्रकृतेति कथमवगन्तु शक्यमिति भवता नोपपाद्यते । 'नास्ति वेदे स्वशब्दः प्रधानस्य, 'यतोऽनुमानमिति द्योतनायानुमानमिति' इति भवदुक्तिः साहसिकी, अद्रष्टृतामूला च । 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'क्षरं प्रधानम्' इति च श्वेताश्वतरे प्रधानस्य स्वशब्दोऽस्ति। 'तदधीनत्वादर्थवत्' इति सूत्रमप्यत्र स्मर्तव्यम्। 'अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमात्' इति तत्र भाषितम्। प्रधानस्याशब्दत्वोक्तिः शब्दैकगम्यत्वाभावेन । उत्तराधिकरणेषु कुत्रापि प्रधानपूर्वपक्षो न क्रियत

इति नोक्तमस्माभिः । तत्तद्वाक्ये तत्पूर्वपक्षबीजसत्त्वे तदुपन्यासः क्रियत एव । अक्षराधिकरणे 'कस्मिन्नु खल्वाकाश ओतः प्रोतश्च'इति पृष्टे 'अक्षरमस्थूलमनणु' इत्युत्तरं दीयते । आकाशाधारत्वेन श्रूयमाणमस्थूलत्वादिधर्मकं प्रधानं स्यादिति तत्र पूर्वपक्षः, अक्षरशब्दस्य प्रधानेऽपि प्रयोगस्य सिद्धान्तिसम्मतत्वात् । भवद्भाष्ये 'कार्यस्य चेत् कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनोऽपीयमुपपद्यते' इति तत्र प्रधानपूर्वपक्ष उद्भावितः । 'अर्थाभावेऽव्ययम्' इति 'अतच्छब्दात्' इत्यस्याव्ययीभावत्ववर्णनं भवतामिष्टमेव ॥

भवत्प्रदर्शितव्युत्पत्तिर्दुर्घटेति नैवोक्तं श्रीमत्सुदर्शनसूरिभिः । तादृशं हेतुवर्णनमत्र न सङ्गच्छत इत्येवोक्तम् । 'अतच्छब्दादित्यत्र तच्छब्द आनुमानं प्रधानम्, प्राणभृतं वा परामृशेत् । तथा च 'प्रधानप्राणभृद्भिन्नवाचकशब्दात्' इत्यर्थः सम्पद्येत । प्रधानप्राणभृद्भिन्नश्च परमात्मा । तथा च 'परमात्मवाचकशब्दात्' इत्येवोक्तं भवेत् । 'तच्च स्वशब्दादित्यनेनैवोक्तमिति पुनरुक्तता दुर्वारा' इत्येवोक्तम् । अस्मद्वर्णितयोजना भवद्भाष्यवर्णितप्रथमयोजना । अत्र योजनान्तरस्य न साङ्गत्यमित्येवोक्तमस्माभिः । तच्चाप्रतिसमाधेयमेव । 'अशब्दात्' इति कुतो नोक्तमिति पृच्छ्यते भवता । ब्रह्मत्वं स्वशब्देन प्रतिज्ञातं प्रथमसूत्रे । ब्रह्मणः स्वशब्दः प्रदर्शितो ब्रह्मसाधकत्वेन । नात्रान्वयः प्रदर्शितः । अत्र व्यतिरेक उच्यते । 'पूर्वमन्वय उक्तः । अथ तद्दार्ढ्याय व्यतिरेक उच्यते' इति श्रुतप्रकाशिका । 'परब्रह्मासाधरणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह' इत्येतत्सूत्रमवतारितं श्रीभाष्ये । असाधरणशब्दा खलु स्वशब्दहेतुना विवक्षिताः । यथा अन्वये, तथा व्यतिरेकेऽपि प्रदर्शनीयम् । 'स्वशब्दात्' इतिवत् 'प्राणभृतः स्वासाधारणशब्दाभावात्' इति खलूपपादनीयं व्यतिरेकप्रदर्शनाय ।

'प्राणभृन्न द्युभ्वाद्यायतनम् , तदसाधारणशब्दाभावात् यथा प्रधानम्' इत्यनुमानशरीरं प्रदिदर्शयिषितं सूत्रकृता । 'अस्वशब्दात्' इत्यर्थे 'अतच्छब्दात्' इत्युक्तम् । 'मुक्तोपसृप्यत्वात्' इति मध्ये सूत्रेणेन बन्धान्मुक्तैः शरीरैः प्राप्यत्वं हेतूकृत्य शारीरव्यावर्तनाय । मुक्तोपसृप्योऽमृतस्य सेतुरात्मा न स्वात्मैव भवेत् । 'यदि सर्वज्ञशब्दोऽपि स्वशब्देन गृहीतस्तदाऽनेन को वा गृहीतः स्यादिति' भवदनुयोगे इष्टापत्तिः, मा ग्राहि कोऽपि ब्रह्मासाधारणः शब्दः ; तदितरासाधारणशब्दाभाव एवात्र हेतुरिति वदाम ॥

नात्र प्रधानप्रापकः शब्दोऽस्ति । प्रधानविषये यथा स्वशब्दाभाव एव हेतुः, तथैव प्राणभृद्विषयेऽपि । सेतुशब्दस्य न प्रधानवाचकत्वम् । गौणार्थाश्रयणे ब्रह्मण्यपि तद्योजयितुं शक्यम् । सेतुसादृश्येन गौणार्थवर्णनमुभयत्रापि सुलभम् । सेतुशब्द एक एवोक्तो भवद्भाष्ये प्रधानप्रापकत्वेन । सेतुशब्दो न प्रधानस्य स्वशब्द इति पूर्वपक्षिणोऽपि सम्प्रतिपन्नम् । 'अतच्छब्दात्' इत्यस्य प्रधानविषये स्वशब्दाभाव एवार्थः । अस्माभिरापादितं पौनरुक्त्यं कथमपि न समाहितं भवद्भिः । पौनरुक्त्यं विनैव व्यतिरेकप्रदर्शनमुखेनार्थवर्णने शक्ये पौनरुक्त्यदोषविषयताकरणं न न्याय्यम् ॥

'एवं चाव्ययीभावेन प्रधानम् , तत्पुरुषेण तच्च प्राणभृच्चेत्युभयं निराचकारेति सुश्लिष्टम्' इति वदद्भिर्भवद्भिरव्ययीभावसमासाश्रयणस्यावश्यकताभ्युपेयते । अव्ययीभावसमास उपपादितो न्यायरक्षामणौ । भवद्भाष्ये तद्योजनैव प्राथमिकी । अत्र योजनान्तरप्रदर्शनस्य को वा निर्बन्धः । 'स्वशब्दात्' इत्येव काङ्क्षितातच्छब्दलाभात् ॥

'एवं ह्यभिप्रैति सूत्रकारः, नायं ब्रह्मणः स्वशब्दः, किं त्वब्रह्मेतरशब्दः, यतोऽयं गुणप्रधानः, न तु स्वरूपप्रधानः । असम्भवाच्चाब्रह्मण्यस्य गुणस्य, स्वशब्दसदृशोऽयं जातो ब्रह्मणः ; न हि व्याकरणज्ञो दैवज्ञ

इत्यपि शब्दा भवन्ति स्वरूपप्रधाना , भवन्ति च शम्भुरीश इत्यादय स्वशब्दा ' इति भवता नूतनयुक्तिप्रदर्शनं पौनरुक्त्यपरिहाराय ॥

प्रथमसूत्रे ब्रह्मस्वरूपमात्रवाचका शब्दा स्वशब्दत्वेन विवक्षिता । अत्र तद्धर्मवाचका शब्दा इति भवदभिप्राय इव । अरूषितविचारोऽय-मिति भवदुक्त विस्मृत भवद्भि । निर्गुणत्वेन भवदभिमतविद्याया सगु-णत्वमेव सूत्रकारमुखेन भवन्त साधयन्ति । भवदभिमतनिर्गुणत्व परि-त्यज्य सगुणत्वसिद्धान्तेन काम व्याख्यान्तु भवन्तो यथाऽभिलषितमेतत्सू-त्रमित्यस्माभिर्वक्तु शक्यम् । वस्तुतस्तु—भवदुक्तिर्न सङ्गता । प्रथम 'अमृतस्य सेतु.' इति ब्रह्मण स्वशब्द इति तत्र प्रदर्शितम् । तस्य च शब्दस्यामृतस्य विधारक इत्यर्थ इत्युक्तम् । अमृतत्वविधारणत्वं धर्म एव, न स्वरूपमात्रम् ॥

'भवन्ति च शम्भुरीश इत्यादय स्वशब्दा । अक्षरशब्दस्तु क्षरणा-भावेन सदातनेन भवति स्वरूपप्रधान इति साधारणीकृतो भवति , असा-धारणीकर्तव्यमीशानशब्दवदिति । निघण्ट्वादौ तु स्याद्बुद्धोऽपि सर्वज्ञ स्वशब्दसदृशत्वाद्वा निघण्टुरुपपद्यते' इति भवदुक्ति 'अमृतस्य सेतुः' इति लिङ्गबोधकशब्दस्य सौत्रस्वशब्दहेतुगृहीतत्वभाषणेन निरस्ता ॥

'सम्भवत्यव्ययीभावेनापि प्राणभृन्निराकरणे तस्य स्वरूपतस्तेन तन्न सम्भवतीति त्यक्तमिति ध्येयम्' इत्युक्तिरपि दुर्बोधा । अव्ययीभावयोज-ना न त्यक्ता भवद्भाष्ये ॥

अत्र तत्त्वपदार्थयोरभेद प्रतिपाद्यत इति भवदभिमान । मुक्तो-पसृप्यत्वव्यपदेश , भेदव्यपदेश , न प्राणभृदिति प्राणभृन्निषेध., स्थित्यदन-रूपभेदप्रदर्शनं च भवदुक्ति निघ्नन्ति ॥

'मुक्तोपसृप्यव्यपदेशाच्च' इति सूत्रेणात्र मुक्तादात्मनो मुक्तप्राप्य ब्रह्म भिन्नमिति स्पष्ट सूच्यते । यथा 'एतमित प्रेत्याभिसम्भविताऽस्मि'

इति प्राप्यप्राप्तृभेदव्यपदेशेन , तद्भेद प्रतिपादितः शाण्डिल्यविद्यायाम् , तथाऽत्रापि मुण्डकपरविद्यायाम् । मुडके 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परम साम्यमुपैति ॥ ' 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ' 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' इति मन्त्रा मोक्षविषया । एते परामृश्यन्ते मुक्तोपसृप्यव्यपदेशसूत्रेण । मुक्तोपसृप्यशब्दस्य भावप्रधानता संप्रतिपन्ना । 'यस्मान्मुक्तोपसृप्यताऽस्य व्यपदिश्यमाना दृश्यते' इति भवद्भाष्यम् । उपैतीति मन्त्रद्वयोक्तमेवानुगम्यते । 'उपसृप्य' इति सौत्रशब्देन "उपैतृत्वरूपप्राप्तृत्वमेव तत्त्वम्, ब्रह्मैव भवति इत्यस्य ब्रह्म इव भवति , तेन परमं साम्यमाप्नोति" इत्यर्थ इति स्पष्टीक्रियते । 'असन्नेव स भवति' इति तैत्तिरीयश्रुतौ 'असदिव' इत्यर्थः संप्रतिपन्नः । ब्रह्मप्राप्तिरेव तत्त्वमिति सूत्रकृदभिप्राय सूच्यतेऽनेन सूत्रेण । तैत्तिरीयेऽपि 'ब्रह्मविदाप्नोति परम्' इत्याप्तिरेव प्रतिज्ञायते उपक्रम एव । 'ब्रह्मणा सह सर्वान् कामानश्नुते' इति सर्वकामावाप्तिर्ब्रह्मणा सहेति परम साम्यं विशदीक्रियते । काठके च 'यथा शुद्धे शुद्धं प्रसिक्तं तादृगेव भवति । एवं विजानत आत्मा भवति गौतम' इति तादृक्त्वमेवोक्तम् । 'मद्भावः' 'ब्रह्मभूयम्' 'ब्राह्मरूपम्' इत्यादिभिः शब्दैर्ब्रह्मस्वभावो विवक्ष्यते, 'अविभागेन दृष्टत्वात्' इति खलु सूत्रम् ॥

'तमेकं जानथ आत्मानम्' इत्युक्त्या ज्ञेयप्रकरणमिदम्, न ध्येयप्रकरणमिति भवदुद्घोषो मोघ एव । 'ओमित्येव ध्यायथ आत्मानम्' इत्यनन्तरमन्त्र एव ध्यानं विधीयते । द्युभ्वादिमन्त्रसमानार्थकत्वेन भवद्भाष्योदाहृता 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायात् बहून्

शब्दान् वाचो विग्लापनं हि तत् ॥' इति श्रुतिरपि विज्ञानानन्तरं ध्यानं कर्तव्यतया विधत्ते । 'नानुध्यायात्' इतीतरध्याननिषेधेनापि पूर्वं ब्रह्मध्यानं विहितमिति गम्यते ॥

'भेदव्यपदेशात्' इति सूत्रस्य 'तमेकं जानथ आत्मानम्' इति ज्ञातृज्ञेयभावेन भेदं हेतूकरोतीति भवद्भाष्यम् । तदपि भवदाशामुत्सारयति । भेदव्यपदेशस्य 'अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशं तस्य महिमानमिति वीतशोकः' इति मन्त्रपरामर्शकत्वं स्वरसम् । तत्रानीश्वराच्छारीरादीशस्यान्यत्वं सहेतुकं व्यपदिश्यते । अनीश्वरत्वं शारीरस्य । ईशः परमात्मा । तस्य प्रीयमाणत्वे तद्दर्शनलाभः । ततश्च वीतशोको भूत्वा तस्य महिमानमेति । 'इति' इति छान्दसः प्रयोगः 'एति' इत्यस्य स्थाने । 'ब्रह्मणो महिमानमाप्नोतीत्युपनिषत्' इत्यनेन समानार्थोऽयं मन्त्रः । ब्रह्ममहिमाप्त्या ब्रह्मणा परमसाम्यं प्राप्यते । 'भेदव्यपदेशात्' इत्यत्र श्रुत्वाऽप्यत्राभेदं दिदृक्षन्ते भवन्त इति विस्मयस्थानमेव ॥

'द्युभ्वाद्यायतनमिति ब्रह्मणः सर्वाधारत्वं निरूप्य तस्य मुक्तप्राप्यत्वस्य मूलेन सर्वविभूतिविशिष्टं ब्रह्म प्राप्यमिति सूच्यते । इदमेवोच्यते श्रुत्या 'ते सर्वगं सर्वतः प्राप्य धीरा मुक्तात्मानः सर्वमेवाविशन्ति' इति । अनन्तराधिकरणविषयवाक्ये च 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इतीत्थमेव फलं वर्ण्यते ॥

अर्चिरादिगत्यपेक्षाऽत्र स्पष्टं कीर्त्यते । प्रकरणपठनात्तस्य विद्याफलोपकारकत्वरूपाङ्गत्वमवगम्यते । 'सत्येन पथा विततो देवयानः' 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा' इति च देवयानगतिः श्राव्यते । एवं च 'अनियमः सर्वासाम्' इति सूत्रप्रदर्शितसार्वत्रिकत्वस्य मुण्डकविद्या अनपवादिकेति स्पष्टम् ॥

अस्मिन्नधिकरणे सर्वैरपि सूत्रैर्ब्रह्मणः सगुणत्वम्, जीवाद्भेदश्च स्पष्टं

बाध्येते । उभयविभूत्याधारत्वं च ज्ञाप्यते ब्रह्मणः । अत्र निर्गुणत्वनिर्विशेषत्वनिष्प्रपञ्चत्वानामन्वेषणं शशविषाणान्वेषणमेव भवेत् ॥

"यस्मिन्नोत मनोऽन्यैः सहकरणगणैर्जायते यश्च नाना
नाड्याधारश्च योऽन्तश्चरति स करणी कर्मभोक्तेति चेन्न ।
विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादा-
त्प्रागुक्तब्रह्मैक्यादनशनसहितात्काशनाच्चान्यसिद्धेः ॥"

इत्यधिकरणसारावली । पूर्वार्धे जीवप्रापकलिङ्गान्युपन्यस्तानि, अदृश्यत्वाद्यधिकरणनिर्वर्तितब्रह्मप्रकरणविच्छेदशङ्कोपपादनाय । प्रथमसूत्रपरामृष्टमन्त्रद्वये सन्ति जीवस्य स्पष्टलिङ्गानीति प्रदर्श्यते । पक्षद्वयस्यापि संशयबीजं प्रदर्श्यते 'द्युभ्वाद्यायतनम्' इति सूत्रे पक्षसमर्पकपदेन । आदिपदग्राह्येषु मनःप्राणाः सन्ति । 'यस्मिन्नोत मनोऽन्यैः सह करणगणैः' इत्यादिपदग्राह्येषु जीवसंयोगोत्थापकमनःप्राणानामोतत्वाधिकरणमुच्यते । 'जायते यश्च नाना' इति श्रुतिपाठक्रममुल्लङ्घ्य बहुधा जायमानत्वं किमर्थं मध्ये निवेशितमिति चेदस्ति तत्र भूयः स्वारस्यम् । 'करणगणैः सह जायते यश्च नाना' इत्यप्यन्वयप्रदर्शनमिष्यते । उपकरणीभूतकरणगणैः सह जायमानत्वमेव जीवलिङ्गं भवेत् । न केवलं बहुधा जायमानत्वम्, प्रकृतिं स्वामधिष्ठायात्ममाययात्मेच्छया बहुधा सम्भवनमीश्वरस्यास्ति । 'करणी' इति णिनिस्ताच्छील्यद्योतनेन कर्मवश्यजन्मपरम्पराभोक्तृतां द्योतयति । ओतमिति तन्तुवायस्थानीयेनेश्वरेण कर्मानुसारेण स्यूतमिति व्यज्यते । ब्रह्माण्डकुलालो ब्रह्म तन्तुवायोऽपि भवति । 'यश्च' इति पुल्लिङ्गेन प्रथममन्त्रे 'अमृतस्यैष सेतुः' इत्यात्मैवोक्तः; स एव 'स एषोऽन्तश्चरते' इत्युच्यते द्वितीयमन्त्रे इति सूच्यते । 'एष' इति न ज्ञानस्य परामर्शः, यस्मात् 'स एषः' इत्युत्तरमन्त्रे आत्मैव परामृश्यत इति भावः । 'यश्च' 'नाड्याधारश्च' इति चशब्देन द्युभ्वाद्यायतनमेवानन्तरमन्त्रे 'यत्र नाड्यः' इति समा-

कृष्यत इति सूच्यते । तेन श्रीशाङ्करोपनिषद्भाष्ये यत्रेति हृदयपरामर्शवर्णन न न्याय्यमिति भाव. । 'नाड्याधारश्च' इतीदमपि 'जायते नाना' इत्यनेनान्वेतव्यम् । तदर्थमेव तस्य पादादौ निवेशनम् । करणगणैः सह नाड्याधारो जायते नाना । करणशब्देन मनोऽपि गृह्यत । 'स करणी कर्मभोक्तेति चेन्न ।' आत्मा करणी भोक्ता जीवो भवितुमर्हति । भोक्तेति तस्यापि प्रस्तावोऽस्ति तृतीयमुण्डकोपक्रम इति सूच्यते । इयं च शङ्का चरमसूत्रेण निवर्त्यते । एव प्राप्तेऽभिधीयते 'विश्वाधारात्मभावात्' 'द्यौः पृथिवी चान्तरिक्षम् ओतम्' इत्युपक्रमपठिताना ग्रहण विश्वशब्देन । विश्वशब्दस्य सर्वपर्यायत्वमाश्रित्य न केवल प्रथमलिकस्य, कि तु चरमोक्ताना चाप्याधार इति सर्वाधार इति भाव सूच्यते । विश्वशब्दस्य जगदर्थकत्व सर्वार्थकत्व च । तत एव तच्छब्दनिर्देश । जीवपक्ष द्युभ्वन्तरिक्षाधारत्वं जीवे न सम्भावितम् । ब्रह्मपक्ष तु मन प्राणनाड्याधारत्व ब्रह्मणि सम्भवतीति भाव. । 'विश्वाधारात्मभावात्' इति न केवलमात्मशब्दमात्रेण ब्रह्मत्वनिर्णय । विश्वाधार आत्मा ब्रह्मैव भवेदिति भाव· । यद्यप्यात्मशब्द उभयत्र रूढ , प्रकरणसमभिव्याहाराद्यनुरोधेन तच्छक्तिर्निर्णेयेति भाव । 'आत्मभावात्' इत्यात्मत्वार्थोक्त्या योगार्थस्यापि ग्रहणेन जीवव्यावृत्तिरिति सूच्यते । नियन्तृत्वविशिष्टव्याप्तृत्व योगार्थ इति सूच्यते । 'अमृतवितरणात्', अमृतविवरणात्' इति वा पाठ । तथा चेत् सेतुशब्दानुरूप्यम् । अमृतत्वस्य विधारक सेतुरिव जलस्य । विधरण वितरण एव पर्यवस्यति । श्रीभाष्यभाषितस्वशब्द आत्मशब्द', अमृतस्य सेतुरिति शब्दश्च । 'मुक्तसृप्यन्ववादात्' 'मुक्तोपसृप्यव्यपदेशात्' इति सूत्र गृह्यते । भावार्थतोच्यते । मुक्तोपसृप्यत्वव्यपदेश इत्यपि सूत्रपाठ इत्युक्तं ब्रह्मामृतवर्षिण्याम् । अमृतस्येति श्रौतपदस्य भावार्थतैव । जीवलिङ्गानि निरस्य ब्रह्मसाधकशब्दलिङ्गान्युपन्यस्यानन्तरं प्रकरणैक्य हेतूक्रियते

सूत्रकृतेति भाव॰ प्रदर्श्यते तुरीयपादारम्भे प्रागुक्तप्रक्रियैक्यादिति । 'अन-शनसहितात्काशनाच्चान्यसिद्धेः । ' द्वासुपर्णेति मन्त्र॰ प्रथमपाठितः । तद-नन्तरपाठित 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान । जुष्ट यथा पश्यत्यन्यमीशं तस्य महिमानमिति वीतशोक ।' इति मन्त्र । उत्त-रमन्त्र परामृष्टः 'भेदव्यपदेशात्' इत्युपान्त्यसूत्रेण । 'स्थित्यदनाभ्या च' इत्यन्त्यसूत्रेण च पूर्वमन्त्र । तस्मिन्नपि मन्त्रेऽस्ति 'अन्य.' इति व्यपदेशो जीवे, ब्रह्मणि च । तथाऽपि जीवान्यत्वं सिद्धयत्यन्यशब्देन । 'अन्ये, अन्ये' इत्युक्ति 'एके, अन्ये' इत्युक्त्या समानार्थैव । जीवपरः प्रथमोऽन्यशब्दः एक इति व्याख्यात श्रीशङ्करभाष्ये । द्वितीयोऽन्यशब्दश्च 'इतर ईश्वर' इति । एवं च 'स्थित्यदनाभ्या च' इति सूत्रपरामृष्ट पूर्वमन्त्रे न केवल स्थित्यदनरूपधर्मभेदेन भेद्यत्वम् , किं तु भेदव्यपदेशोऽपि कथञ्चिद्भवति । 'अन्यसिद्ध' इत्यन्ते निवेशनेनान्त्यसूत्रेऽप्युपान्त्यसूत्रपरामृष्टभेदव्यपदेशो-ऽस्तीति सूच्यते । अन्यसिद्धेरिति परमात्मसिद्धया श्लोकमुपसहराति । श्रुति-क्रमश्चानुस्रियते । सौत्रस्थितिपदेन कूटस्थतया साक्षितयाऽवस्थितिरभिप्रे-येत । श्रुतौ अनशनमदनविरुद्धम् । स्थितिर्नादनविरुद्धा । अनश-नसहितकाशनमदनविरुद्धम् । अनशनसहितकाशनादपि भोक्तृजीवान्य-त्वसिद्धिः । अन्यसिद्धेरित्यन्यत्वसिद्धेरित्यप्यर्थ । यद्यप्यदनेनोपसं-ह्रियतेऽधिकरणम्; द्युभ्वाद्यायतनस्यादननिरास एव तात्पर्यम् । अदनेति सूत्रे जीवपरामर्शस्तन्निरासेन ब्रह्मसाधनशेषतयैव ।

> "व्योम तत्ताक्षमातं यदि किमिह ततो जन्म चास्येच्छयोक्तं
> नाडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन् ।
> निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके
> सौबालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम् ।

इत्यनन्तरश्लोकः । अत्र पूर्वपक्ष्युक्तजीवलिङ्गानामन्यथासिद्धिरुच्यते ।

सर्वव्याप्ते भगवत्यक्षवर्ग ओत । 'यद्यप्युपकरणोपकरणिभावसम्बन्धो नास्ति; अस्त्याधारत्वम् । 'व्याप्ते' इत्यात्मशब्दस्यापि सूचनम् । यद्यपि मन-आदीनामोतत्वमधिकरणत्वेनान्यथासिद्ध भवेत् , कथमितरालिङ्गयोरस्मिन् संयोजनमिति पृष्ट्वा परिहार उच्यते । 'जन्म चास्येच्छयोक्तम्' 'बहुधा जायमान' इति श्रुतमुपबृंहितं गीतया 'सम्भवाम्यात्ममायया' 'बहूनि मे व्यतीतानि जन्मानि' इति । श्रौतबहुशब्दोऽनुगम्यते भगवता । उक्तमिति सामान्योक्त्या 'अजायमानो बहुधा विजायते' इति श्रुतिर्गीता च संगृह्यते । अत्र केन सूत्रेणैतद्बहुधाजायमानत्वलिङ्गस्य ब्रह्मण्युपपत्ति प्रदर्श्यत इति पृष्ट 'स्थित' इति चरमसूत्रेणेति भाव सूच्यते । स्थितिर्नाम शरीरे हृदयगुहायामवस्थानम् । तच्च हार्दरूपतया । तत्रावस्थानं च जीवेन सह । एवं चोभयोर्हृदयनाडीसम्बन्ध ; मन आदीनामोतत्वाधिकरणत्वे चोभयोः समानानि । हार्दरूपेणायमपि नाड्याधारतया मन.प्राणाधिकरणतया बहुधा जायते । यथा जीवस्य बहूनि जन्मानि , तथेश्वरस्यापि । 'तव चार्जुन' इत्युभयोर्जन्मवत्त्व गीतम् । 'भुवनस्य नाभि' इति श्रुतो भगवान्नाडीचक्रस्यापि नाभिर्भवति । 'अरा इव रथनाभौ' इति 'नाभिदृष्टान्तः प्रदर्शितो मुण्डके । दार्ष्टान्तिकमपि ब्रह्म नाभिरिति श्रूयत इति स्वारस्य प्रदर्श्यते 'नाडीचक्रस्य नाभि' इति । 'भवति च' इति 'जायमान' 'सम्भवामि' इत्यनयोर्ग्रहणम् । सौत्रस्थितिपदस्य हार्दरूपेण स्थितिरर्थ इति सूच्यते , हार्दरूपेण तिष्ठन्निति । 'अन्तश्चरते बहुधा जायमान' इति श्रुत चरणरूपचलनं कथं विभोर्ब्रह्मणोऽवकल्पेतेति चेत् ,—स्वेच्छापरिगृहीतहार्दविग्रहद्वारा तदुपपत्तिरिति प्रदर्श्यते तृतीयपादेन । तर्हि सर्वव्यापिनः कथमन्तश्चरणमिति चेत्तदप्यनूद्य समाधत्ते निष्कम्पेति । 'द्विरूपं खल्वन्तर्यामित्वं भगवतः । विग्रहपरिग्रहेणैकम्; सर्वव्याप्तेन स्वरूपेणापरम् । विग्रहेण देहान्तश्चरणं तावन्मुख्यत एव । स्वरूपेणान्तश्चरणं तु 'यः पृथिवीमन्तरे सञ्चरन्,

इत्यादिना सुबालोपनिषदाम्नातसर्वान्तर्यामित्वरूपचरणमत्रापि सङ्घटत एव' इति चिन्तामणिः ॥

'यदि स्वशब्देन श्रुतिमात्रप्रदर्शने निर्बन्धः ; श्रीमन्मध्वव्याख्यानुसरणं स्वरसम् । 'स्वपर्यायात्मशब्दात्' इत्यर्थो ग्राह्यः । किमर्थमात्मशब्दादिति नोक्तमिति चेत्,—आत्मशब्दस्य ब्रह्मणः स्वशब्दत्वं सूचयितुमिच्छति सूत्रकृत्, स्वपर्यायात्मशब्दस्तस्य स्वशब्दो भवति इति तन्मतम् ॥ 'तच्छब्दभिन्नशब्दादिति व्युत्पत्तेः संभवेऽपि स्वशब्दादित्यनेन पुनरुक्ततेत्युक्तिस्तु सूत्रकाराशयाज्ञाननिबन्धना । कुतः । यत्र प्राणभृन्निराकरणार्थमेवेदमिति प्राणभृच्चेत्यन्तं पठित्वा सूत्रमव्ययीभाव एव केवलमभ्युगम्येत । सत्यात्मशब्देऽशब्दादित्येव वक्तव्यमेवमभिप्राय इत्येतदप्यजानद्भिर्भवद्भिः । तथा च तत्पुरुषोऽवश्याभ्युपेयो भवति । तत्र कश्चिच्छब्दोऽपि ग्राह्यो भवति । एवं च यदि सर्वज्ञशब्दोऽपि स्वशब्दशब्देन गृहीतस्तदा कोवाऽनेन गृहीतः स्यादिति' इति भवदुक्तिः सुनिरसा । यथा 'स्वशब्दात्' इत्यस्य स्ववाचकशब्दादित्यर्थस्तथा 'अतच्छब्दात्' इत्यस्य तद्वाचकशब्दाभावादित्यर्थो विवक्ष्यते । 'स्वशब्दात्' इत्यन्वयहेतुः । 'अतच्छब्दात्' इति व्यतिरेकहेतुः । 'अशब्दात्' इत्युक्ते 'अतच्छब्दात्' इत्येवार्थो विवक्षणीयो व्यतिरेकप्रदर्शनस्याभिप्रेतत्वात् । तथा च तच्छब्दाध्याहारप्रसङ्गः । हेतुनिर्देशे हेतोः पक्षासाधारण्यं न्याय्यम् । 'स्वशब्दाभावात्' इति विवक्षितो हेतुः । 'अशब्दात्' इत्युक्ते शब्देतरप्रमाणादित्यर्थोऽपि प्रतीयेत । तथा चास्पष्टतादोषः । ब्रह्मणः स्वशब्दोऽस्तीत्युक्तं प्रथमसूत्रे । यथा ब्रह्मणः स्वशब्दोऽस्ति तथा प्रधानस्य स्वशब्दो नास्ति द्युभ्वादिवाक्यानन्तरं मुण्डकप्रकरण इति तत्त्वम् । तन्मन्त्रानन्तरं मुण्डकोपनिषदि आनुमानप्रधानवाचकशब्दो नैव दृश्यते । पूर्वपक्षिणा प्रधानपरत्वेन शङ्कनीयः शब्द एव तत्र नास्ति । तत्पूर्वप्रकरणे अक्षरादृश्यादिशब्दाः

प्रधानपरत्वेन शक्यशङ्का आसन् । अत्र तु तदत्यन्ताभाव एव तत्त्वमिति दुरपह्नवम् । एतत्प्रकरणे प्रधानबोधकशब्दाभावस्य सुस्पष्टत्वात् पूर्वपक्षिसंप्रतिपन्नत्वाच्च , तं प्रति तस्य दृष्टान्त्वेनोदाहरणं क्रियत इति वयम् । अर्थाभावबोधकाव्ययीभावेन प्रधानप्रत्यायकशब्दात्यन्ताभावो विवक्षत इत्यव्ययीभावस्वारस्यम् । प्राणभृद्विषयेऽपि तस्य स्वशब्दो नास्तीत्युच्यतेऽनेन सूत्रेण । 'सत्यप्यात्मशब्दे' इति भवदुपन्यासो न चतुरः । स्वासाधारणशब्दः खलु स्वशब्दः । आत्मशब्दो न जीवासाधारणः पूर्वपक्षिणोऽपि । तस्य पूर्वपक्षिरीत्या जीवासाधारण्यकथनेऽपि व्युत्पादितमेव सूत्रकारेण तस्य ब्रह्मशब्दत्वं प्रथमसूत्रे । अतस्तस्य पुनर्जीवासाधारण्यं वक्तु न शक्यम् । 'अतच्छब्दात्' इति हेतुः प्रधानप्राणभृतोरेकरूपतयैव व्याख्येयः । प्रधानविषये स्वशब्दात्यन्ताभावस्य सप्रतिपन्नत्वात् तथैव प्राणभृद्विषयेऽप्यर्थवर्णनं स्वरसम् । अव्ययीभावसमास सूत्रार्थत्वेन सम्मत एव भवद्भाष्यस्य । अव्ययीभावसमासस्य भवद्भाष्ये वर्णितत्वाद्व्यतिरेकप्रदर्शनमेवात्र सूत्रकाराभिप्रेतमिति स्पष्टम् ।

एवं प्राणभृद्विषये स्वशब्दाभावस्योक्तौ , तदनन्तरमाशङ्का भवति— 'द्वा सुपर्णा सयुजा सखाया' 'समाने वृक्षे पुरुषो निमग्नः' इति द्वौ मन्त्रावत्र स्तः , ययोर्जीवः पुरुषशब्देन अत्तृत्वेन च व्यवह्रियते , कथमस्मिन् प्रकरणे प्राणभृच्छब्दाभावो वक्तुं शक्येतेति । एवमाशङ्कोद्भावने सूत्रद्वयेन प्रतिवचनं क्रियते सूत्रकृता । 'घट्टकुटीप्रभातायितो भवदाक्षेपः । यद्यपि प्राणभृतोऽभिलापोऽस्ति तन्मन्त्रयोस्तस्य साधकत्वेन प्राप्यब्रह्मभिन्नत्वेन प्रतिपादनं दृश्यते । अत्र ज्ञेयत्वेनोपास्यत्वेन प्राप्यत्वेन प्रतिपिपादयिषितः प्रकरणी क इति खलु विचारः । इमौ मन्त्रावेव जीवान्यस्य ब्रह्मणः प्रकरणित्वं द्रढयतः । समाने वृक्षे निमग्नात्पुरुषाज्जीवादन्यो मग्नजीवोद्धारक ईश प्रकरणी । 'भेदव्यपदेशात्' इति तन्मन्त्रपरामर्श , 'स्थित्यदनाभ्या

च' इति द्वासुपर्णमन्त्रपरामर्शश्च भाष्यद्वयसम्मतः । प्रकरणादिति सूत्रमपि ब्रह्मणः प्रकरणित्वं स्पष्टं वक्ति । इत्थमव्ययीभावसमासस्योत्तरसूत्रावतारकत्वस्वारस्यम् ।

नात्र धर्ममात्रभावाभावौ हेतूक्रियेते यथा अन्तर्याम्यधिकरणे । 'तद्धर्मव्यपदेशात्' इति तत्र प्रथमसूत्रहेतुः । अत्र तु स्वशब्दादिति । अनन्तरमतद्धर्माभिलापादिति तत्र । अत्र तु अतच्छब्दादिति । सर्वान्तर्यमनं ब्रह्मधर्मत्वेन श्रुतिप्रसिद्धमिति तद्धेतूकृतं तत्र प्रथमसूत्रे । तत्र 'अतद्धर्माभिलापात्' इति तद्धर्माभिलापाभावविवक्षणे, अदृष्टत्वादयः प्रधानधर्माः अभिलप्यन्त इति हेतोर्बाधो वक्तुं शक्येत । तत्र प्रधानविषये तदसम्भाविता द्रष्टृत्वादिधर्माः, संसारिजीवविषये तदसम्भाविता अमृतत्वादिधर्माश्चोपन्यसनीयाः । शारीरविषये च करणाधीनद्रष्टृत्वादौ स्वरसानां द्रष्टृत्वादीनां श्रवणात्, अदृष्टत्वादीनां तदसम्भावितानां धर्माणामुपन्यसनमावश्यकम् । अतस्तदधिकरणसूत्रयोर्दृष्टान्तत्वेनोपन्यसनं विषमम् ।

---

## भूमाधिकरणम् ।

'परमात्मप्रकरणाविच्छेदान्मुण्डकोपनिषदः आपादचूडं परमात्मपरत्वमेव प्रसाधितम् । तर्हि छान्दोग्ये भूमविद्यायां जीवप्रकरणाविच्छेदाज्जीव एव प्रतिपाद्यत इति पूर्वपक्षोत्थानेन प्रमाणद्वारा सङ्गतिः । पूर्वं 'ओतं मनः प्राणैश्च सर्वै'रिति प्राणसम्बन्धिनः परमात्मत्वमुक्तम् । अत्र प्राणसम्बन्धिन एव हिंसायोग्यत्वश्रवणाज्जीवत्वं प्रतीयत इत्यर्थद्वारा सङ्गतिः' इति द्वेधा सङ्गतिः प्रदर्शिता श्रुतप्रकाशिकायाम् । 'आत्मशब्दात् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तत्रात्मशब्दः प्राणेऽनेकान्तः । 'तरति शोकमात्मवित्'इत्यत्राब्रह्मणि प्राणे प्रयोगादित्याक्षेपिकी सङ्गतिः' इति कल्पतरुप्रदर्शिता सङ्गतिः । सा चानुस्मृतेतरग्रन्थेषु । नवनवोल्लेखरुचिमद्भिर्भवद्भिः प्रद-

शिता नूतना सङ्गतिरसङ्गता ।

'यद्ब्रह्माण्डमण्डलायमानसर्वकार्यविधारकमधिभूतं वाय्वारब्धं सूत्रं तदुपलक्षितस्य प्रत्यक्त्वेन ज्ञेयस्य ब्रह्मणो विचारोऽत्यवर्तत । अथ तस्यैव प्रत्यगात्मन्युपसहरणेन प्रासाल्पत्वशङ्कानिर्हरणायाध्यात्ममेव सौषुप्तस्थानतया प्रतिपादितं कारणसामान्यविधारकं यत्प्राणाख्यं सूत्रं तदुपलक्षितस्य भूयस्त्वमुपपाद्यम्' इति भवदुक्तसङ्गतिः । पूर्वाधिकरणविषयवाक्ये वायुर्नैव प्रत्यपादि जगद्विधारकत्वेन । तदुपलक्षितस्य ब्रह्मणो विचारोऽत्यवर्ततेत्युक्तिर्मिथ्या । वायुविषयशङ्कामात्रं प्रदर्शितं भवद्भाष्ये 'वायुर्वै गौतम तत्सूत्रम्' इति श्रुत्यन्तरमुदाहृत्य । निरस्ता च सा शङ्का स्वशब्दादिहेतुभिः । पूर्वपक्षे वायोरेव द्युभ्वाद्यायतनत्वं ज्ञेयत्वं च शङ्कितम् । वायूपलक्षितस्य ब्रह्मणो ज्ञेयत्वं न पक्षद्वयेऽपि । पूर्वपक्षे न ब्रह्मप्रस्तावः । सिद्धान्ते न वायुप्रस्तावः । 'वायोः प्रत्यगात्मन्युपसहरणेन प्रासाल्पत्वशङ्कानिराकरणाय' इति भवदुक्तिः कथं संगच्छते । 'स्वप्नप्रसूनमकरन्दरसस्य मन्ये साधुत्वमन्यदुपपादयितुं क्षमेत'इति श्रीवेङ्कटनाथोक्ता परिहासोक्तिरत्र स्मर्तव्या भवति । अधिभूतमिति भवदुक्तिरचतुरा । अधिलोकमिति वक्तव्यम् । लोकानामाधारत्वं खलूक्तम् ।

यदि नूतनप्रदर्शनेच्छा, बहुधाऽत्र पूर्वाधिकरणेन संगतिः स्वरसतया वक्तुं शक्या । आत्मनो द्युभ्वाद्याधारत्वं मुक्तोपसृप्यत्वं चोक्तं सूत्रकृता । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इत्युक्तं विचारितमुण्डकश्रुत्या साधनदशाविषये । अत्र आत्मनो निरतिशयसुखत्वबोधनेन एकभोग्यत्वमुच्यते । साधनदशायामितरत्यागपूर्वकं एकज्ञेयत्वमिव फलदशायां, 'यत्र नान्यद्विजानाति' इतीतरहानपूर्वकमेकभोग्यत्वमत्रोच्यते ।

'आनन्दरूपममृतं यद्विभाति' इति ब्रह्मण आनन्दरूपत्वेन पारितोभानं संग्रहेण सूचितं मुण्डके । तदत्रालैवाधस्तादात्मैवोपरिष्टादित्यादिना भूमवाक्ये विस्तरेणोपपाद्यते । ब्रह्मणो विपुलसुखत्वेन निरूपणेन वेदा-

न्ताः ब्रह्मणि पुरुषार्थतया समन्वीयेरन् । तदर्थमेव प्रथमपादे आनन्दमयत्वोपपादनं, द्वितीये सुखविशिष्टत्वाभिधानं च ।

पूर्वाधिकरणे द्युभ्वादीनामाधारो ब्रह्मेत्युक्तम् । तस्य सर्वायतनस्य किमायतनमिति शङ्का 'स भगवः कस्मिन् प्रतिष्ठितः' इति अत्र उद्भाव्य, 'स्वे महिम्नि' इति प्रथममाचार्येण तत्प्रश्नस्योत्तरं दत्वा महिमशब्दस्य विभूत्यर्थकत्वात् स्वविभूत्याधारकत्वमापद्येतेत्याशङ्क्य तन्मा शङ्कीति 'अथ वा न महिम्नि' इत्युक्त्वा अनन्याधारत्वमेव स्वमहिम्नि प्रतिष्ठितत्वमिति बोध्यते । पूर्वं 'विजानन्नतिवादी' इति सूचितमतिवादित्वमत्र विव्रियते ।

देवर्षिर्नारदोऽत्र गुरूपसत्ता शिष्यः । 'तरति शोकमात्मवित्' इति तेन पूर्वमेव श्रुतम् । आत्मज्ञानाभिलाषात् स गुरुमभ्यगच्छत् । यज्ज्ञानेन शोकस्य परं पारं तीर्येत स आत्मा प्रत्यगात्मा वा परमात्मा वा भवेत् । सर्वथा कश्चिदात्मैव स भवितुमर्हति नानात्मा मुख्यप्राणः । 'अस्ति भूयः', 'अस्ति भूयः' इति पृष्ट्वा बहु परित्यक्तम् । भूतपञ्चकं तेनासारत्वेनाल्पत्वेन परित्यक्तमिति सम्प्रतिपन्नम् । नामाद्याशान्तेषु प्रतीकोपासनमेवोक्तं 'नाम ब्रह्मेत्युपास्व' इत्यादिवाक्यैः । प्राणोपदेशं श्रुत्वा जिज्ञासयोपसन्नः शिष्यो विरराम प्रश्नात् । स च प्राणः प्रत्यगात्मेति विवक्षितं गुरुणा, गृहीतं च शिष्येण देवर्षिणेति वयम् । स्वस्वरूपे विश्रान्त उपदेश इति गृहीतं शिष्येण । इमे अर्था निपुणं व्यञ्जिताः 'आत्मज्ञानाभिलाषादनुपरतशुचे नारदाय प्रयुक्तं प्राणे सानत्कुमारं निरमति वचनं हिंसानर्हः स जीवः । अल्पप्रत्यर्थिभूमा निरवधिकसुखोऽप्येष एवेति चेन्न प्राणाख्यात्सत्यशब्दोदितमधिकतयोपास्यमत्र ह्युपात्तम् ।' इति । देवर्षये नारदाय प्रसिद्धगुरोर्वचो न मुख्यप्राणे विरमेत् । शिष्यो वा न तदुपदेशेन तुष्येत् तस्यात्मत्वं वा गृह्णीयात् । प्राणशब्दस्य गुरुबुद्ध्या शिष्यबुद्ध्या च प्राणभृत्प्रत्यगात्मवाचकत्वमेव । हिंसनार्हत्वं भूयोऽत्र प्राणविषये श्रा-

च्यते । तच्च प्राणस्य जीवत्वनिश्चायकम् । न मुख्यप्राणस्याचेतनस्य हिंस्त्रत्वसम्भवः । न वा तस्य शोकतारकात्मत्वसम्भवः । स्वस्वरूपस्य विशोकत्वं पूर्वविदितन्यायादितन्त्रप्रसिद्धम् । स्वस्वरूपमात्रे विश्रान्त उपदेश इति शिष्यो मत्वा तदुपरि प्रश्नकरणाद्विरराम । यद्यपि प्रश्नाद्विरराम शिष्यः स्वस्वरूपमात्रवेदनेन तत्कामिता शोकोपरतिर्न सम्भवेदिति जानन् कारुणिको गुरुः पुनरपृष्टोऽपि स्वयं तदुपरि तदधिकं सर्वसुखमूलं भूमानं प्रतिबोधयामास ।

'कथं पुनः प्राणं भूमानं मन्यमानस्य 'तरति शोकमात्मवित्' इत्यात्मविविदिषया प्रकरणस्योत्थानमुपपद्यते । प्राण एवेह आत्मा विवक्षित इति ब्रूमः । तथा हि— प्राणो ह पिता प्राणो ह माता प्राणो भ्राता इति प्राणमेव सर्वात्मानं करोति' इति भवत्सूत्रभाष्यम् । उद्भाविताया शङ्कायाः समाधानं प्राणशब्दस्यात्मपरत्वाभिप्राय एव लभ्येत, न मुख्यप्राणपरत्वे । स एवार्थः स्वरसो भाष्यवाक्यस्य ।

भवदीय उपनिषद्भाष्ये 'प्राणे प्रज्ञात्मनि दैहिके मुख्ये' इति प्राणशब्दार्थो भाषितः । प्रज्ञात्मा जीवो भवेत्, न मुख्यप्राणः । 'एनानुत्क्रान्तप्राणान्' इत्यस्य 'त्यक्तदेहनाथान्' इत्यर्थो भाषितः । देहनाथशब्दो जीवे स्वरसः । 'एष तु वा अतिवदति' इति वाक्यस्यावतारिकायां 'स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा चातः परमुपरराम' इति भाषितम् । इदं सर्वं प्राणस्य जीवपरत्वभाषणमेव ।

'सम्प्रसादात्' इति सौत्रहेतुखण्डस्य प्रकरणोक्तप्राणशब्दवाच्यादित्यर्थ इत्यविगीतमावयोः । श्रौतप्राणशब्दस्थाने संप्रसादशब्दः पठितः सूत्रे । तस्य मुख्यप्राणे कुत्रापि प्रयोगो न दृष्टचर इति सम्प्रतिपन्नम् । मुख्यप्राणे तस्य योगो नास्तीति निर्विवादम् । जीवे तस्य प्रयोगोऽस्ति 'य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरूपसम्पन्नः' इति । संप्रसादशब्दस्य

न प्राणे योगो वा रूढिर्वाऽस्ति। मुख्यप्राणविवक्षणाय लक्षणैवाश्रयणीया। जीवपरत्वे श्रुतिप्रयोगानुगमः कृतो भवेत् सूत्रे । 'सुषुप्तिकाले आत्मना सता सम्पन्नः सन् सम्यक् प्रसीदतीति जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति संप्रसादशब्दो यद्यपि सर्वजन्तूनां साधारणः' इति संप्रसादशब्दस्य सर्वजीवसाधारण्यं भाषितमुपनिषद्भाष्ये । 'सम्प्रसादेरत्वा चरित्वा' इति संप्रसादशब्दस्य सुषुप्तौ प्रयुक्तत्वेऽपि नात्र सुषुप्तिर्विवक्ष्यते। 'तस्यां च सम्प्रसादावस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभिप्रेयते' इति भवद्भाष्ये । जीवविवक्षणे न कोऽपि क्लेशः । सुषुप्तिमात्रे सम्प्रसादशब्दस्य शक्तिकथनेऽपि सुप्तः संप्रसन्न इति तस्यामवस्थायां सुप्तः पुरुष एव सम्प्रसादवान् भवति । प्राणस्य न कोऽपि संप्रसादस्तथा । लक्षणाश्रयणेऽपि जीवस्यैव सन्निकर्षाधिक्यम् । योगार्थश्च तस्मिन् सम्यग्भवति।

'य एष सम्प्रसाद'इत्यत्र संप्रसादशब्देन मोक्ष्यमाणो जीवः परामृश्येत । तस्मिन् काले सम्यक् प्रसीदति तस्मिन् परमात्मेति तस्य संप्रसादशब्देन निर्देशोऽत्यन्तस्वरसः । पुण्यपापजनितं सर्वकालुष्यं विहाय तदा सम्यक् प्रसन्नो भवति इत्यपि तच्छब्दस्तस्मिन् स्वरसः । 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' इति शोकमुक्तत्वसुखत्वादिपरामर्शोऽत्रावश्यकः पूर्वपक्षप्रापकसंशयबीजद्योतनाय । कालुष्यरहितजीवस्वरूपस्यैव प्रकरणोक्तसुखत्वान्वयसम्भवात् जीवे निरतिशयसुखत्वोपपत्तिप्रदर्शनायात्र स्वरूपसुखबोधकसंप्रसादशब्दः प्रयुज्यते पूर्वपक्षसामञ्जस्योपपादनाय। मुख्यप्राणे वा शोकयुक्तजीवे वाऽभिप्रेते पूर्वपक्षस्यात्यन्तासम्भव एव भवेत् निरतिशयसुखत्वबोधकभूयोवाक्यैर्विरोधात् । पूर्वपक्षे प्राणस्यैव भूमत्वात् तस्मिन् सुखभूमत्वसम्भव उपपादनीयः पूर्वपक्षिणा । संप्रसादशब्देन जीवस्य यत्राभिधानं क्रियते तस्मिन् वाक्ये 'स्वेन रूपेणाभिनिष्पद्यते, इत्यनुपदमेवोच्यते । स्वरूपाविर्भावे आसन्ने तस्मिंस्तच्छब्दप्रयोगः । अतः

संप्रसादशब्दप्रयोगेण प्रकरणोक्तनिरतिशयसुखत्वस्योपपत्तिं सूचयति सूत्रकृत् पूर्वपक्षसंम्भवप्रदर्शनाय । 'आविर्भूतस्वरूपस्तु' इत्याविर्भूतस्वरूपस्यैव विशोकत्वादिगुणयोगसम्भव इति वक्ष्यते । शोकातितीर्षोः शिष्यस्य शोकोत्तीर्णः खलु कश्चिदात्मा तुष्टिकरो भवेत् ।

पूर्वाधिकरणविषयभूते मुण्डके 'तमेवैकं जानथ आत्मानं' इत्यात्मन एकध्येयत्वमुक्तम् । तत्रैव 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति भगवत्प्रसादेनैव तत्स्वरूपसाक्षात्कारसम्भव इत्युक्तम् । हार्दत्वेन उपासकहृदये निचाय्यत्वाय भगवतः स्थितिरुक्ता 'स्थित्यदनाभ्यां च' इति पूर्वाधिकरणान्ते । तस्यानुग्रहेण ब्रह्मनाडीप्रवेशः, तत उत्क्रान्त्यादिकमिति वक्ष्यते 'हार्दानुगृहीतः शताधिकया' इति फलाध्याये । हार्दानुग्रहेण संप्रसन्नो मुक्तो भवति । 'ज्ञानप्रसादाद्विशुद्धसत्त्वस्ततस्तु तं निष्कलं ध्यायमानः' इति मुण्डके ज्ञानप्रसाद उक्तः ।

'भूमा प्राणादध्युपदेशादिति वक्तव्यम् , यद्यपि वक्तव्यमथापि किमर्थमेवमुक्तम् , यथा श्रुतिहृदयं स्वस्थानविशिष्टवेषेणायमुपादेय इत्येवमर्थं .... ....किमस्य स्थानं सुषुप्तम् अथ न जागरमस्य स्थानं तत्तु ममताऽहन्तानुस्यूतानां सर्वेषामपि स्थानम् , नास्यैव, स्वप्नस्थानं तु सदपि सवासनान्तःकरणसाधारण्यान्नास्यैव , सुषुप्तं त्वनितरसाधारणस्यैव स्थानम् , न तु प्राणो वावेत्याह श्रुतिः सत्यमेवमाह अथापि आशाया भूयानित्याह , आशानाशेऽप्यवस्थाने हि ततो भूयान् स्यात् तन्नाशेऽप्यवस्थानं चास्य सुषुप्तावेवेति' इति भवदुक्तं सर्वं जीव एव सम्यगन्वेति, न मुख्यप्राणे । अवस्थाः ममताऽहन्तादय आशा च जीवस्यैव । भवद्भाष्यकारभाषितान्यपि प्राणशब्दस्य जीववाचकत्वे समञ्जसानि । सुषुप्त्यवस्थायाः पुरुषार्थत्वं न नारदो मन्येत । 'नाहमत्र भोग्यं पश्यामि । विनाशमेवापीतो भवति' इति

इन्द्रेण निन्द्यमाना सा देवर्षिं न तर्पयेत् । संप्रसादशब्दस्य योगार्थस्वारस्यमसदुपपादितरीत्यैवाभ्युपगमनीयम् ।

जीवस्यैव प्राण इति नामेत्युक्तं भवति भवद्भाष्यादिभिर्भवद्ग्रन्थेन च । इत्थं च शब्दमात्रे विवादो नार्थे विवाद इति फलति । शुद्धस्य केवलस्य सुखरूपस्य सुखत्वाद्विशोकत्वाच्च तस्य प्राणशब्देन निर्देशः कृतो गुरुणेति शिष्यः प्रश्नादुपरराभेति पूर्वपक्षोपपत्तिः ।

आत्मशब्दस्य जीवपरसाधारण्यमुक्तं सूत्रकृता वैश्वानराधिकरणप्रथमसूत्र इति भवन्मतम् । आत्मशब्दस्य ब्रह्मण्यसाधारण्यं निर्धारितं पूर्वाधिकरण इति च भवन्मतम् । अत्रात्मशब्दस्य मुख्यप्राणविषयत्वशङ्का कथं सङ्गच्छेत । उपक्रमे उत्तरत्र चात्मशब्दः पठ्यते । प्राणशब्दवाच्य एवात्मशब्दवाच्यः पूर्वपक्षेऽपि ।

'प्राणिहिंसेति वदन्ति न जीवहिंसेति इति भवदुक्तिः । प्राणी जीव एव, न प्राणमात्रम् । 'देही नित्यमवध्योऽयं' इति गीताश्लोके देही जीवो न देहः । 'जीवहिंसा' इति व्यवह्रियत एव । देहद्वारा हिंसा । 'अहिंसन् भूतानि', 'न हिंस्यात् सर्वा भूतानि' । 'प्राणादधीति कुतो न सूत्रितम्' इति भवत्प्रश्नस्योत्तरं दत्तमेवास्माभिः ।

संप्रसादशब्देन हार्दपरमात्मानुग्रहेण तत्संपत्त्यैव जीवस्य संप्रसन्नत्वमिति सूचनेनापि अधिशब्दोक्तं परमात्मनस्तदधिकत्वं दृढीक्रियते ।

मुख्यप्राणपरत्वेनात्र प्राणशब्दस्य व्याख्यानं प्राचीनवृत्तिविरुद्धमिति भवताऽभ्युपगम्य वृत्तिर्न साध्वी इति दूष्यते ।

भवद्भाष्यकारैर्भवता च जीवधर्मा एव वर्ण्यन्ते श्रुत्युक्त प्राणधर्मत्वेन ; तेन च प्राणशब्दो जीवपर्यायः इत्यभ्युपगम्यते पर्यवसानतः ।

'यः प्राणः स वायुः' इति श्रुत्या वायोरवस्थाविशेषः प्राणो जीवस्योपकरणभूतो जीवपरतन्त्रोऽचेतनः । यद्यपि श्रुतिहृदयं न सम्यक् विदितं

नारदस्येति शंक्येत वेदाङ्गेषु तन्त्रान्तरेषु च शिक्षित एव सः । 'अथ वा तन्त्रान्तरीयाभिप्रायात्समस्तकरणवृत्तिः प्राणः । प्राणाद्या वायवः पञ्चेति' इति भाषितं भवद्भाष्ये नवायुक्रियाधिकरणे । तन्त्रान्तरशिक्षया वायुः प्राणो जीवोपकरणभूत इति प्रागेव विदितं नारदेन । वाय्वपेक्षया भूयसोऽस्तित्वं व्युत्पादितमेव प्रश्नप्रतिवचनपरम्परायाम् । यद्यपि वायोः पृथक्पर्यायो नास्ति, तथाऽपि तेजःपर्याये 'स एतद्वायुमागृह्याकाशमभितपति' इति तेजःकारणस्य वायोरपि ग्रहणमस्त्येव । भाषितं च भगवत्पादैरनन्तरपर्यायभूताकाशविषये 'आकाशो वा तेजसो भूयान् वायुसहिततेजसः कारणत्वाद्व्योम्नः । 'वायुमागृह्य' इति तेजसा सहोक्तो वायुरिति पृथगिह नोक्तः तेजसः' इति । अतो वायोः परित्यक्तत्वात्तद्विशेषस्य प्राणस्य पुनः पठनं न भवेत् । तन्त्रान्तरव्युत्पत्त्याऽपि तस्य वायुविशेषत्वमेव पूर्वगृहीतम् । अस्मिन् प्रकरणे 'यस्मादूर्ध्वं यो निर्दिश्यते स ततोऽतिरिच्यते प्राणाच्चोपरिष्टादुपदिष्टो भूमेति सोऽपि तदन्यः स्यादिति भावः' इत्यानन्दगिर्युक्तन्यायेन वायुपरित्यागस्य कृतत्वात् प्राणपरित्यागोऽपि कृत एव । अतो न प्राणस्य भूमत्वशङ्कासम्भवः ।

किं च 'प्राणः प्राणेन याति', प्राणः प्राणं ददाति,' 'प्राणाय ददाति' इति श्रुतं स्वतन्त्रयानम्, स्वात्मदानम्, संप्रदानत्वं पित्राद्यात्मत्वं च जीव एव स्वरसम् । 'अनुत्क्रान्तप्राणान्' इति बहुव्रीहिरेव । 'स एव नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा नातः परमस्तीत्युपरराम' इति भगवत्पादभाषितमपि प्राणशब्दस्य आत्मवाचकत्वे स्वरसम् । प्रत्यगात्मन्येवोपदेशस्य विश्रान्तिं जग्राह शिष्यः । अत्र भूमविद्यायां प्रत्यगात्मैव परमसुखत्वेन प्राप्यत्वेन 'आत्मतः प्राणः', आत्मतः सर्वं' इति सर्वकारणत्वेन चोपदिश्यत इति पूर्वपक्ष्यभिमानः । 'प्राणो वै सत्यम्' इति श्रुतौ प्राणशब्दस्य जीववाचकत्वं प्रसिद्धम् ।

'धर्मोपपत्तेश्च' इति द्वितीयसूत्रं भवदभिमतनिर्गुणत्वभञ्जकमिति स्पष्टम् । मुण्डकोक्ताक्षरविद्यायाः भूमविद्यायाश्च सगुणत्वमेवोपदिशति सूत्रकृत् ।

नामाद्याशान्तवेद्ये प्रतिवचनवशात् प्रश्नतश्चाधिकोक्तेः
प्राणे विश्रान्तिदृष्ट्या भवतु तदवधि प्रस्तुतात्मोपदेशः ।
मैवं जातो हि नामादिवदिह परमादात्मतः प्राण उक्तः
स्वस्मादित्यत्र तस्यादिति न विघटनात्स्वारसिक्या विभक्तेः ॥

इत्यधिकरणसारावली । नामाद्याशान्तेभ्यो भूयस्त्वात्प्राणस्य पूर्वत्यक्तत्रायुविशेषान्मुख्यप्राणादधिकः प्रत्यगात्मा प्राणशब्दवाच्य इति भावः । आत्मप्रकरणमिदम्, आत्मबुभुत्सया तदुपदिदिक्षया चोपक्रान्तम्, तस्मात्तद्विश्रान्तिभूमित्वेनाभिलप्यमानः प्राण आत्मैव भवन्नानात्मा मुख्य प्राण इति द्योत्यते प्रस्तुतशब्देन । प्रस्तुतं प्रक्रान्तम् । 'आत्मत प्राण' इति प्राणस्यात्मना जातत्वोक्तिः पूर्वपक्षविरोधिनीव । तस्या गतिः प्रदर्शिता पूर्वपक्षिणा आत्मशब्दस्य स्वपर्यायत्ववर्णनेन । स्वस्मादेव प्राणाख्यः प्रत्यगात्मा जात इति पूर्वपक्षिवर्णनमिति प्रदर्श्यते 'परमादात्मतः प्राण उक्तः स्वस्मादित्यत्र तस्यात्' इति । 'अधिकोक्तेः' इति सौत्राधिशब्दस्यार्थः सूच्यते । संप्रसादात्प्राणशब्दवाच्यात्प्रत्यगात्मनो भूयस्त्वेनाधिकतयोपदिष्टो भूमा परमात्मा । 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः' इति वर्णितस्य देवदुर्लभस्य भगवद्विश्वरूपस्य दर्शनीयभगवत्प्रसादाद्दिव्यं चक्षुर्लेभे धृतराष्ट्रः ।

'तत्राश्चर्यमभूद्राजन् धृतराष्ट्रः स्वचक्षुषी ।
लब्धवान् वासुदेवस्य विश्वरूपदिदृक्षया ॥

लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः ।
विस्मिता ऋषिभिः सार्धं तुष्टुवुर्मधुसूदनम् ॥'

इति तदवमेरे चक्षुर्लम्भितो धृतराष्ट्रः

'भगवन् मम नेत्राभ्यामन्तर्धानं वृणे पुनः ॥

भवन्तं दृष्टवानस्मि नान्यं सन्द्रष्टुमुत्सहे ।

ति पुनरप्यन्धतां प्रार्थयामास । तद्रीत्या भूमद्रष्टुरन्यदर्शनेऽरुचिः । भूमानुभववतो विषयान्तराणामद्रष्टृता ।

'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।

स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥'

ति कुवलयानन्दोदाहृतश्रीयामुनाचार्यश्लोकोऽत्र भाव्यः । अस्मिन्नधिकणे नयमयूखमालिकाया विस्तरेण व्याख्याता 'यत्र नान्यत्पश्यती'ति श्रुतिस्तत्सिद्धान्तरीत्या ।

## अक्षराधिकरणम् ॥

'पूर्वाधिकरणे स्वे महिम्नि प्रतिष्ठितत्वमुक्तम् , तत्तु परमात्मव्यतिरेक्तस्य श्रूयत इति शङ्कया सङ्गति' इति श्रुतप्रकाशिका । 'अथ वा येनाक्षरं पुरुषं वेद सत्यम्' इति सत्याक्षरशब्दाभ्यां निर्दिष्टस्य परस्य ब्रह्मणः सत्यशब्दवाच्यत्वं पूर्वत्र प्रतिपादितम् । अत्राक्षरशब्दवाच्यत्वं प्रतिपाद्यत इति वा सङ्गतिः । एवं वा । पूर्वं जीवनिरासः । इह जीवप्रधानयोर्द्वयोरपि निरास इति' इत्यधिकरणचिन्तामणिः ।

'अक्षरशब्दस्य वर्णब्रह्मणो रूढिनिरूढिभ्यां संशये प्रणवसार्वात्म्य न गौण प्राणसार्वात्म्यवत् इति प्रत्यवस्थाननिरासात् सङ्गतिः ।' इति कल्पतरुः । पूर्वं सत्यशब्दस्य ब्रह्मणि रूढत्वाद्भूमा ब्रह्मेत्युक्तम्, तद्वदत्राप्यक्षरशब्दस्य वर्णेषु रूढत्वाद्वर्ण एवाक्षरमस्त्विति दृष्टान्तसङ्गतिः' इति ब्रह्मामृतवर्षिणी ।

पूर्वं प्रश्नपरम्परा प्राणे विश्रान्ता । तत उपरि प्रश्नान्तरं विनैव कारुणिकेन गुरुणा तदधिकं सत्यशब्दवाच्यं ब्रह्म स्वयमुपदिष्टम् । अत्र

बृहदारण्यके प्रथमं 'कस्मिन् नु खलु ब्रह्मन् लोका ओताश्च प्रोताश्च' इति पृच्छन्ती गार्गी 'मा ते मूर्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि माऽतिप्राक्षीः' इति याज्ञवल्क्येन न्यषेधि । पुनरपि ब्राह्मणानुज्ञया सा प्रश्नद्वयं प्रयोक्तुमारेभे । तत्र प्रथमप्रश्नस्योत्तरत्वेन कीर्तित 'आकाश'। 'कस्मिन्नोतः प्रोतश्च' इति प्रश्नान्तरस्यैवोत्तरं दीयते 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति । 'गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यदानमथैव' इति हिरण्यादीनां महिमत्वमुक्तम् । अत्र 'हिरण्यादिमन्तोऽब्रह्मविदः कृपणाः, ब्रह्मविद एवाकृपणाः' इति सूच्यते ।

पूर्वं यत्र नान्यत्पश्यतीत्युक्तम् । अत्र 'नान्यदतोऽस्ति द्रष्टा' इत्युच्यते ।

पूर्वं 'यदि वा न महिम्नि' इति स्वस्यानन्याधारत्वमुक्तम् । अत्र नान्यदतोऽस्ति द्रष्टा' इत्युक्तात्सर्वप्रशासितुरन्यस्तत्सदृशो नास्तीत्युच्यते । एवं बहुधा सङ्गतिर्वक्तुं शक्या ।

'आत्मैव ब्रह्मेति पारोक्ष्यमुत्सारितं प्रथमम् । ततो भूमैवात्मेति इतरदर्शनमात्रनिषेधेन परिच्छेदो निराकृतः । इदानीं नामरूपसामान्यान्यभावस्यैव व्यावर्तनेनाखण्डमक्षराख्यमद्वैतं स्वरूपमवबोधयितुमाह' इति सङ्गतिप्रदर्शनं भवतः । आत्मशब्देन जीवोऽभिप्रेयत इव भवता, अपरोक्षत्वकथनात् । जीवब्रह्मभेदः सुदृढतमाधि अनेकसूत्रैः प्रथमाधिकरणे । 'आत्मैव ब्रह्म' इति तदधिकरणनिर्णीतत्वोक्तिरयथार्था । द्वितीयाधिकरणेऽपि प्राणशब्दनिर्दिष्टाज्जीवादधिक एव भूमोपदिष्टः । अत्रापि प्रशासनीयचेतनाचेतनजगतो भेद एव दृढीक्रियते ।

कस्मिन् सर्वमोतं च प्रोतं चेति प्रश्नेनोपक्रमः । 'अक्षरस्य प्रशासने विधृतौ तिष्ठतः' इति प्रशासनपूर्वकविधरणमुपदिष्टं गुरुणा । सूत्रद्वयेन धरणं प्रशासनं च हेतुत्वेनोपन्यस्येते । तृतीयसूत्रेण भवन्मतरीत्या द्वितीं-

यवस्त्वन्तरमात्रप्रतिषेधने पूर्वसूत्रद्वयसिद्धान्तितधृतिप्रशासने ध्रुवं व्याहन्येयाताम् । प्रधानजीवव्यावर्तनं खल्वत्र चिकीर्ष्यते क्रियते च । कारणत्वायोगव्यवच्छेद प्रदर्शनीयोऽत्र भवन्मतरीत्या । द्वितीयवस्त्वन्तरनिषेधे कारणत्वायोग एव दृढीकृतो भवेत् । उपक्रमानुगुण्येन सर्वविधरणं वक्तव्यम् । मध्यवाक्यानुगुण्येन सर्वप्रशासनं वक्तव्यम् । सर्वविधारकसर्वप्रशासितृब्रह्मतुल्यवस्त्वन्तरनिषेधेन पूर्वोक्तसर्वधृतिप्रशासने दृढीक्रियेयाताम् ।

प्रणवविषयशङ्का प्रदर्शिता भवद्भाष्ये प्रथमसूत्रनिरस्यत्वेन । सा च शङ्का नात्रोत्थातुमर्हति । नात्र वर्णस्फोटवादावलम्बेन पूर्वपक्ष. प्रदर्श्यते भवद्भाष्यतद्व्याख्यासु भवद्ग्रन्थे वा । 'किमक्षरशब्देन वर्ण उच्यते किं वा परमेश्वर इति । तत्राक्षरशब्दस्य वर्णे प्रसिद्धत्वात्, प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात् 'ओङ्कार एवेद सर्वम्' इत्यादौ च वर्णस्योपास्यत्वेन सर्वात्मकत्वावधारणात् वर्ण एवाक्षरशब्द' इति भवद्भाष्यभाषित· पूर्व पक्ष. । 'न च वर्णातिरिक्ते स्फोटात्मनि अलौकिकेऽक्षरपदप्रसिद्धिरस्ति लोके । न चैष प्रामाणिक इत्युपरिष्टात् प्रवेदयिष्यते (देवताऽधिकरणे)' इति भामत्यां स्फोटे प्रसिद्धिर्निराकृता । अक्षरशब्दस्य वर्णमात्रे प्रसिद्धावपि न तद्विशेष ओङ्कारे प्रसिद्धि· । वर्णस्य सर्ववस्तुधरणप्रशासनादिकं न शक्यशङ्कम् । वर्णविशेषस्योङ्कारस्यैव तादृशमाहिमा शक्यते भवद्भाष्ये श्रुत्यन्तरबलेन । 'सर्वाण्योङ्कारनामानि, तद्व्याप्तत्वात् , 'तद्यथा शंकुना सर्वाणि वर्णानि संतृण्णानि एवमेव सर्वा वाक् इति श्रुते.' इति भामती । वर्णे प्रसिद्धोऽक्षरशब्दः । अक्षरविशेषभूतोङ्कारव्याप्ता सर्वा वाक् । तद्व्याप्तानि सर्वाणि नामानि । 'ओङ्कार एवेद सर्वम्' इति तस्य सार्वात्म्यं श्रूयते । अतोऽत्र श्रुतं वर्णे रूढमक्षरमोङ्कारः स्यात्' इति खलु भवदीयपूर्वपक्ष· । अस्यात्यन्तबलवजता सुस्पष्टा । 'वर्णानामहस्वत्वादीर्घत्वानुपपत्तेः स्नेहलौहित्यछायादिधर्माप्रसङ्गाच्च । प्रसङ्गाभावेऽपि प्रतिषेध. सम्भवति यथा नान्तरिक्षे न दिवीत्यग्नि-

चयननिषेध इति चेन्न । निषेधस्य प्रसक्तविषयताया एव स्वतः प्राप्त
त्वात् । गत्यन्तराभावे ह्यप्रसक्तविषयाश्रयणम् । नान्यदा इति श्रुतप्रका
शिकायां भामत्युक्तोपपत्तिनिरासः कृत । न कोऽपि समाधिरुक्तो भव
ता तत्र । 'असङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणम
मुखम्' इत्येते निषेधाः प्रणवविषये न कथमपि सङ्गच्छेरन् । यद्यपि भा
मत्या अप्रसक्तनिषेधस्य परिहारे यत्न कृतः, 'अह्रस्वतादीर्घत्वे वर्णविषये
बाधिते । तत्र यत्नो नैव कृतस्तस्याशक्यत्वात् । 'न तदश्नाति किंचन' इत्यु
क्तोऽशननिषेधो न सङ्गच्छते । 'न तदश्नाति कश्चन' इति भोग्यत्वनिषेधो वैदि-
कानां परमादरभूते ओङ्कारे विरुद्ध ।

भवद्भाष्यवर्णितवर्णपूर्वपक्षस्यासम्भावितता निश्चिन्वानाः श्रीमद्दीक्षि-
ताः वैयाकरणैकदेशरीत्या वर्णस्फोटस्य कारणत्व पूर्वपक्षे वर्णयाबभूवु. ।

मुण्डकवाक्येऽक्षरशब्दो ब्रह्मणि प्रकृतौ च प्रयुक्त. । अतस्तच्छ-
ब्दो न पक्षीकृतोऽदृश्यत्वाधिकरणे । अक्षरशब्दस्य प्रधानजीवब्रह्मसु प्रसि-
द्धेः सत्त्वात् तत्त्रयविषयशङ्काऽत्र ।

अत्र विषयवाक्यप्रयुक्त आकाशशब्दः अव्याकृताकाशपर इति
भाषितं भगवत्पादैरुपनिषद्भाष्ये । 'आकाशे तदोतं च प्रोत च' इति प्रथ-
मप्रश्नोत्तरस्य व्याख्या 'हे गार्गि, यत् त्वयोक्तं उर्ध्वं दिव इत्यादि तत्सर्वं
यत्सूत्रमाचक्षते तत्सूत्रम् । आकाश तदोत च प्रोतं च यदेतद्व्याकृतं सू-
त्रात्मकं जगत् अव्याकृताकाशे अप्स्विव पृथिवीधातुः, त्रिष्वपि कालेषु व-
र्तते उत्पत्तौ स्थितौ लये च' इति भाषिता भवदीयोपनिषद्भाष्ये ।

श्रुत्युक्ताकाशशब्दस्य भूताकाशपरत्वाभावस्य तत्पारभूताव्याकृताका
शपरत्वस्य च सम्प्रतिपन्नत्वात् सूत्राणां च श्रुत्यर्थानुगुण्यस्य स्वारसिकत्वात्
श्रुत्युक्ताकाशशब्दस्य न केवलाकाशपरत्व, किं तु तत्पारभूततदन्ताव्याकृता-
काशपरत्वमिति श्रुत्यर्थं प्रदर्शयति सूत्रकृदम्बरान्तधृतेरितीति वयम् ।

अम्बरशब्दः केवलाकाशपरः । आकाशपर्यायोम्बरशब्दः । 'आकाशस्यान्तः पारभूतं अव्याकृतमम्बरान्तः तस्य धृतेः' इति श्रीभाष्यम् । श्रुतौ आकाशस्य धृतिरुक्ता अक्षरविषये । श्रुत्युपात्ताकाशशब्दोऽव्याकृताकाशवाचीति सम्प्रतिपन्नं द्वाभ्यामपि भाष्यकृद्भ्याम् । 'श्रुत्युक्ताकाशधृतेः' इति सूत्रविवक्षितो हेतुः । 'अम्बरपारभूताव्याकृताकाशधृतेः' इत्येव तदर्थः सपद्यते ।

भवद्भाष्योक्तरीत्या सूत्रार्थवर्णने सम्प्रतिपन्नश्रुत्यर्थविरोधेन आकाशपदस्यापार्थं गृहीत्वा हेतुनिबन्धनं करोति सूत्रकृदिति भवन्मतोपरि दूषणं दुर्वारम् । सौत्रेण अम्बरान्तशब्देन श्रुतिस्थाकाशशब्दो व्याख्यायत इति सुस्फुटम् ।

श्रुतिस्थाकाशशब्दोऽम्बरवाचक इति पूर्वपक्षी । अम्बरस्य धरणं मूलप्रकृतेः सम्भवतीत्यक्षरं मूलप्रकृतिरिति तदभिमानः । यदि श्रुत्युपात्ताकाशशब्दः अव्याकृताकाशसज्ञमूलप्रकृतिवाचको भवेत् तस्यापि धारकं कारणं न मूलप्रकृतिर्भवेदिति सिद्धान्ते तन्निरासः । श्रौताकाशशब्दस्य सिद्धान्त्यभिप्रेतार्थबोधनेनैव पूर्वपक्षनिरासः सुशकः । 'आकाशशब्दनिर्दिष्टः किं भूताकाश उताव्याकृताकाश' इति तदर्थविचारप्रदर्शनं कृतं श्रुतप्रकाशिकायाम् ।

भवन्मतरीत्या सौत्रहेतुः संप्रतिपन्नश्रुत्यर्थविरुद्धः । श्रुत्यर्थानुसारिणा भाव्यं सिद्धान्तहेतुना । श्रुत्युक्ताक्षरशब्दवाच्यं खल्वत्र निर्णीयते । अम्बरपर्यन्तधारणमात्रं नोक्तमक्षरविषये । तदधिकतत्पारभूताव्याकृताकाशस्यापि धारयितृ अक्षरं प्रधानादन्यदेव भवेत् । अतः प्रथमसूत्रेण प्रधानं व्यावर्त्यत एव ।

उपनिषद्भाष्ये स्वैरेव भाषितः श्रुतेरर्थो ध्रुवं न स्मृतो भवद्भाष्यकारैः सूत्रभाष्ये ।

'अत्राकाशेति विहायाम्बरग्रहणे किं कारणम् । प्राभाय स्यात् । कथमेवं स्यात् । श्रुत्यानुपूर्वीं विहाय प्रासमात्रायैव पदविनिमयो ब्रह्मसूत्र इति' इति भवदीया स्वबुद्धिकल्पितोक्तिः । अस्त्यम्बरशब्दप्रयोगे महत्प्रयोजनम् । श्रुतिप्रयुक्ताकाशशब्दो भूतप्रथमबोधको वा आकाशादिसर्वाचिदवधिभूताव्याकृताकाशपरो वेति विशये केवलाकाशपर्यायभूताम्बरशब्द प्रयुज्य तस्याप्यन्तर्भूतस्य धृत्युक्त्यैव पूर्वपक्ष्युक्तकेवलाकाशधृतिर्निरस्येत । पर्यायशब्दप्रयोग एवात्र न्याय्य ।

अस्मद्भाष्यात् प्राचीना भामती । तत्र भास्करव्याख्यामात्रस्य दूषण कृतम् । नास्मद्भाष्यार्थस्य । यद्यपि वर्णविषयो भवद्भाष्यपूर्वपक्षो दूषितो भास्करभाष्ये प्रथमसूत्रस्यास्मद्भाष्यप्रदर्शिता व्याख्यारीतिर्न प्रादर्शि तत्र । 'ये तु प्रधानं पूर्वपक्षयित्वाऽनेन सूत्रेण परमात्मैवाक्षरमिति सिद्धान्तयन्ति । तैरम्बरान्तधृतेरित्यनेन कथं प्रधानं निराक्रियत इति वाच्यम् । अथ नाधिकरणमात्र धृति , अपि तु प्रशासनाधिकरणता । अथाप्यम्बरान्तधृतेरित्यनर्थकम् । एतावद्वक्तव्यमक्षरं प्रशासनात् इति' इति भामती भास्करभाषितविषया । 'अम्बरान्तधृते प्रधानं न निराकर्तुं शक्यम् , असाधारणत्वात्' इति कल्पतरुरपि तद्विषय एव । अस्मद्भाष्यरीत्या अम्बरान्तशब्दस्याम्बरपारभूतप्रधानार्थकत्वात् अक्षरविषये श्राविता तद्धृतिः प्रधानव्यावर्तनक्षमैव । द्वितीयसूत्र चास्मद्रीत्या जीवविशेषभूतसमष्टिपुरुषव्यावर्तकम् । तृतीय सूत्रं ब्रह्मान्योभयव्यावर्तकम् । अतो भास्करभाष्यविषये भामतीकल्पतरूक्तं दूषण अस्मद्भाष्यार्थं न स्प्रष्टु क्षमम् । इदमबुद्ध्वा शुकत्रस्पठितं भामतीदूषण भवद्भन्थेऽस्मद्भाष्यस्यापि दूषकत्वेन । अस्मदर्थमनूद्योच्यते भवद्भिः 'साधु श्रोतुं रमणीयमेतत्प्रणवस्य प्रथम बुद्धावनारोहे प्रधानस्यैवारोहे कथमन्यथा तस्य निराकरणमिति, अत एव भास्करादिभिः कलहायमानान् प्रत्याहैतान् भामती, कुतोऽयं क्रमो भवतामक्रमिणाम् ,

अक्षरं प्रशासनादित्येतावदेव वक्तव्यम्, 'नन्वत्र प्रथममेव ब्रह्म वा प्रधानं चेति विशयानानां भास्करलक्ष्मणार्यप्रभृतीनां कथमुपपत्तिः । अनुपपत्तिरेवादृश्यत्वाधिकरणेनैव चरितार्थत्वात् इति', 'अहह विचित्र हीद वर्तते । एकैकप्रमाणसिद्धमप्येतेषां बुद्धिमाधिरोहति । प्रणव परं लोकवेदोभयप्रसिद्धोऽपि नाधिरोहतीति' इति भवतां विचित्रोक्तिः । न शब्दस्य कस्मिंश्चिदर्थे प्रसिद्धिमात्रं प्रकरणदृष्टतद्बाधकतदसंभावितबहुलिङ्गविरोधेन तदर्थसमर्पणाय प्रभवेत् ।

'अथ कथ जीवावरोहः प्रशासनात् । न हि प्रकृष्टं शासनं जीवस्यास्ति । एव तर्हि सुग्रीवजीवो नाधिरूढः स्यात्' इति भवदुक्तिरतिविचित्रा । प्रोपसर्गेण शासनस्य सार्वत्रिकत्वं वर्ण्यतेऽस्माभिः । 'प्रशासनं प्रकृष्टं शासनं' इति श्रीभाष्यम् । 'क्वचिदप्यप्रतिहतत्वेन विषयप्रकर्षाच्छासनस्य प्रकर्षः' इति श्रुतप्रकाशिका । सुग्रीवाज्ञा तद्भृत्येष्वप्रतिहता । तद्भृत्याश्च शाखामृगाः । सर्वेषां परमात्माधीनत्वात्सर्वविषयं तत्प्राशासनं । 'अस्तु किमुत्तरमुच्यतां प्रकृतस्य प्रश्नस्येति चेत् । इदमुत्तरमुच्यते । श्रुतावाकाशपदेनाव्याकृताकाशकथनेऽपि न वयं तेन तद्गृह्णीमः । यतः स्वशब्दबलेन स्वार्थसमर्थने प्रवृत्ताः स्मः । तेनैव कृतकारिणोऽपि संवृत्ताः स्मः । तत्र कथं स्वव्यवस्थामेव स्वयमुल्लघयामः । नोल्लंघयामः । अतो वायुमदंबरमेव गृह्णीमः' इति भवतामुद्दण्डा हठात्कारोक्तिः । श्रौताकाशशब्दस्याव्याकृताकाश एव वास्तवार्थ इति भवताऽभ्युपगम्यते । अस्मद्भाष्यरीत्या अम्बरान्तशब्दस्यार्थवर्णने श्रुत्यनुसारी भवेत्सौत्रहेतुः । इतरथा श्रुतिसूत्रयोर्विरोधो दुष्परिहरः । श्रुतेरपार्थ एव वर्णितो भवेत्सूत्रेण । कामं भवन्तु भवन्तो यथाकामं प्रमाणातीताः मा भवन्तः सूत्रकारमुन्मत्तं कुर्वन्तु ।

भाष्यस्य सूत्रानुगुण्यमन्विष्यद्भिर्भवद्भिः सूत्रस्य श्रुत्यानुगुण्यं परित्यक्तमिति भवतां महती शोच्यता । सूत्रस्य श्रुत्यानुगुण्यमपरित्यज्य भव-

द्भाष्यमेव प्रामादिकत्वेन परित्याज्यम् । इतरथा सूत्रं भाष्यं च उभे प्रमत्ते भवेताम् । स्वकीयमुपनिषद्भाष्यं च व्याहन्येत । 'गुणे त्वन्याय्यकल्पना' इति भवदीयोक्तं न प्रस्मर्तव्यम् ।

'अन्यभावव्यावृत्तेश्च' इति तृतीयसूत्रस्य नान्यवस्तुसामान्यनिषेधकत्वम् । तस्यार्थस्य श्रुतिप्रकरणे वा अधिकरणशरीरे वा नोपयोगः । न केवलमनुपयोगः, किन्तु स्पष्टविरोधोऽपि ।

जन्मादिलक्षणायोगान्ययोगव्यवच्छेदावध्यायकृत्यामित्यविगीतम् । अस्मिन्पादेऽयोगव्यच्छेदः क्रियत इति भवन्मतम् । अन्ययोगव्यवच्छेद इत्यस्मन्मतम् । 'अन्यभावव्यावृत्तेश्च' इत्यन्ययोगव्यवच्छेदोऽपि सुसूचयिषित इव । लक्ष्यमाणवस्तुसदृशान्यव्यावृत्तिरभिप्रेयते ।

भवद्भाष्ये यद्यदन्यद्ब्रह्मणः पूर्वपक्ष्यते, प्रणवो वा प्रधानं वा जीवो वा, अक्षरस्य तद्भावो व्यावर्त्यत इति सूत्रार्थो वर्णितः । 'यद्यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः । 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ इति' इति भाषितम् । अर्थान्तरमपि प्रदर्शितं तत्र जीवमात्रनिरासपरतया । 'अन्यभावो भेदस्तन्निषेधादिति सूत्रार्थः । 'तथा नान्यदतोऽस्ति द्रष्टृ' इत्यात्मभेदप्रतिषेधात् न शारीरस्योपाधिमतोऽक्षरशब्दवाच्यत्वम्' इति च भाषितम् । 'तस्माद्वर्णप्रधानाव्याकृतजीवानामसंभवात्, संभवात्तु परमात्मनः परमात्मैवाक्षरमिति सिद्धम्' इति भामतीनिगमनं इतरस्माद्व्यावर्तनमेव व्यावृत्तिशब्दार्थत्वेन ग्राहयति नेतरवस्तुमात्रसद्भावप्रतिषेधम् ।

"'समाने पूर्ववत्त्वात्' इति सामासिकाधिकरणे अन्येतरादिसर्वनामशब्दानां पूर्वनिर्दिष्टसदृशवाचित्वस्य व्यवस्थापिततया 'नान्यदतोऽस्ति' इत्यादिवाक्येष्विव 'यत्र नान्यत्पश्यति' इत्यादिवाक्येऽपि समानान्यनिषेधपरत्वावधारणान्नानुपपत्तिः" इति श्रीरङ्गरामानुजमुनिभिरुक्तमप्यत्रावधेयम् ।

'प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं
तस्याप्याकाशतोक्त्या धृतनिखिलजगत्क्षोत्रितत्त्वं तु तत्स्यात् ।
मैवं द्रष्टृत्वपूर्वैरनितरनियतैः शासनायत्तधृत्या
किं च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तुल्यतद्दृष्ट्रपोह ॥ इति
अधिकरणसारावली । प्रख्याताकाशेति श्रुतिस्थाकाशशब्दस्य प्रसिद्धाकाश-
परत्वं प्रधानशङ्काबीजमिति प्रदर्श्यते । सौत्रहेतौ प्रख्याताकाशमंबरशब्देन
व्यपदिश्य तस्याप्यन्तभूतं अवधिभूत अव्याकृतं श्रौताकाशशब्दविवक्षितं
अंबरान्तशब्देन निर्दिश्य तद्धरणस्य अक्षरे श्रूयमाणत्वं परामृश्यते । इत्थं
च प्रधानव्यावृत्ति सुलभा । प्रधीयते अस्मिन् सर्वमचेतनजातमिति प्रधान-
शब्दस्य व्युत्पत्ति सांख्योक्ता । तस्मिन् सर्वस्य ओतप्रोतत्ववर्णनमुचितमिति
पूर्वपक्ष्यभिमानः सूच्यते प्रधानमिति स्वविकृतिवहनादिति च । अत्र
समष्टिपुरुषस्य धारकत्वेन शङ्केति द्योत्यते 'धृतनिखिलजगत्क्षत्रितत्त्व तु'
इति । अत्र 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुताविव निःसमत्वं
बोध्यते 'नान्यदतोऽस्ति द्रष्टृ' इति श्रुतिवाक्येनेति चतुर्थपादेन प्रदर्श्यते ।

पूर्वाधिकरणे सत्याख्या उक्ता ब्रह्मणः । सत्यशब्दस्य दहरवाक्यो-
क्तनिर्वचनरीत्या चेतनाचेतननियमनमर्थः । सत्यशब्दस्य यौगिकार्थपौ-
ष्कल्यमत्रोच्यते ।

'ब्राह्मणाभिवदनलिङ्गाच्च' इति भवदुपन्यस्तलिङ्ग साधारणं नासा-
धारणम् । 'ब्रह्मवादिनो वदन्ति', 'यत्कवयो वेदयन्ते' इत्यादिवदत्र प्रयोगः ।
नात्र जपादिशब्दप्रयोगो यथा 'तज्जपः' इति योगसूत्रे प्रणवजपपरे ।
"ब्रह्मविदो वदन्ति इति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते', इति
गुहाधिकरणे भगवत्पादाः । ब्राह्मणा ब्रह्मवादिनो ब्रह्मनिष्ठाः ।

विषयवाक्यगताकाशपदस्याव्याकृताकाशपरत्वं सूत्रकारेण व्याख्या-
यते द्वितीयसूत्रे 'चशब्देन' इति रत्नप्रभाकृतः । 'चकार आकाशशब्दस्य

भूतत्वनिरासार्थं । भूताकाशस्य कार्यान्तःपातिनः श्रुतसर्वकार्याश्रयत्वायोगात् अव्याकृतमज्ञानमेवाकाशः प्रधानशब्दित इति तदाश्रयत्वाच्चाक्षरं न प्रधानमित्यर्थ ' इति रत्नप्रभा । अतोऽत्राकाशशब्दस्याव्याकृतपरत्वेन निर्णय. क्रियते सूत्रकृतेति संप्रतिपन्नम् । अवश्यापेक्षितस्यार्थस्य सौत्रस्पष्टप्रतिपादन वयं वर्णयामोऽम्बरान्तपदेन । श्रौताकाशशब्दस्य भूतपरतामत्र वर्णयति सूत्रकृदिति भवद्वर्णनं रत्नप्रभया प्रतिषिद्धम् । अक्षरशब्दस्य शब्दतन्मात्रपरत्वमभिमन्यते पूर्वपक्षीति भवतोच्यते । तस्य च आकाशादिधारकत्वसम्भव इति भवदाशय. । अक्षरशब्दस्य न शब्दतन्मात्रायां प्रसिद्धि । 'श्रुतावाकाशपदेनाव्याकृताकाशकथनेऽपि न वय तेन तद्गृह्णीम । अतो वायुमदंबरमेव गृह्णीम ' इति भवत सिद्धान्तोक्ति प्रतिषिद्धा रत्नप्रभया ।

अक्षरशब्दस्यास्ति प्रयोगो ब्रह्मजीवप्रधानेषु । 'यमक्षरं वेदविदो वदन्ति आत्मानमात्मन्यवलोकयन्तम्' इति कुमारसम्भवे तस्य ब्रह्मविषयत्वेन वेदवित्प्रसिद्धिरुक्ता । 'शास्त्रस्था वा तन्निमित्तत्वात्' इति शास्त्रप्रसिद्धिः सन्निकृष्टतरा वेदार्थप्रतिपत्तौ ।

द्वाभ्यामधिकरणाभ्यां विचारिताया मुण्डकविद्यायामक्षरशब्दस्य ब्रह्मणि प्रसिद्धि. सम्पादिता । 'अथ परा यया तदक्षरमधिगम्यते' 'येनाक्षर पुरुषं वेद सत्यम्' इति तत्राक्षरस्य प्रकरणित्वं दुरपह्नवम् । तत्र पक्षद्वयेऽपि प्रधानवाचकोऽपि भवत्यक्षरशब्द· । 'प्रधानमेव त्वक्षरशब्दनिर्दिष्ट भूतयोनि' इति तत्र भगवत्पादभाषितं पूर्वपक्षिवाक्यम् । त्वत्पक्षे अक्षराद्भूतयोनि. परस्य परमात्मन प्रतिपाद्यमानत्वात्' अथ परा यया तदक्षरमधिगम्यते' इत्यत्र परस्या विद्याया विषयत्वेनाक्षर श्रुतम् । 'यदि पुन. परमेश्वरादन्यदद्दश्यत्वादिगुणकमक्षरं परिकल्प्येत नेयं पराविद्या स्यात् । ' इति च तत्र भाषित सिद्धान्ते । पक्षद्वयेऽपि तत्राक्षरशब्दस्य प्रधाने प्रसिद्धिः

सम्मता । जीवेऽपि प्रसिद्धिरभ्युपगता पूर्वपक्षिणा । ब्रह्मण्यपि प्रसिद्धिरुक्ता सिद्धान्तिना । तत्र दृष्टा त्रिष्वपि प्रसिद्धिमवलम्ब्यात्र संशयोत्थानम् । अक्षरशब्दस्य वर्णे प्रसिद्धिमवलम्ब्य वर्णपूर्वपक्षकरणस्याभिमतत्वे अदृश्यत्वाधिकरण एव तद्विषयः पूर्वपक्षः प्रदर्शनीयः । 'अथ परा यया तदक्षरमधिगम्यते' इत्यत्रापि वर्ण एव स्यादिति चेत् । स्यान्नाम का नो हानिः । तत्राहृश्यत्वादिगुणक इत्युक्तमिति हि तूष्णीमासं' इति भवदुक्तरमाविरुद्धाहृताक्षरशब्दघटितभगवत्पादपूर्वपक्षसिद्धान्तवाक्यैः प्रतिषिद्धयते । तत्रात्र च प्रधानशारीरपूर्वपक्षः क्रियते परावर्त्यते चेति समानभावयोः । अदृश्यत्वाधिकरणेऽक्षरशब्दविषयं बाधिर्यं वा आन्ध्यं वा ऊढं पूर्वपक्षिणा, सिद्धान्तिना च मूकत्वमूढमिति भवद्वर्णनं न साधु । भवद्भाष्यविरुद्धं च तद्वर्णनम् । अनाच्छाद्य पूर्वपक्षसम्भवे आच्छादनं कृत्वा पूर्वपक्षवर्णनं न युक्तम् ।

'समुदायप्रसिद्धया वर्ण एवाक्षरम्', 'अक्षरशब्दः समुदायप्रसिद्धया वर्णेषु रूढः ।' इति भामतीरीत्या वर्णसामान्ये रूढावपि, वर्णविशेषप्रणवपरत्ववर्णने, लक्षणैवाश्रिता भवति । सामान्ये शक्तस्य विशेषरूपेण विशेषवाचित्वं लक्षणयेति तान्त्रिकाः ।

'अथ चाकाशादेव समुत्पद्यन्त इत्यादावपि भूतमेव स्यात । न स्यात् । स्पष्टेन लिङ्गेनापोदितत्वात्' इति भवता अकाशाधिकरणपौनरुक्त्यं वारयितुमिष्यते । वर्णात्यन्तासम्भावितस्पष्टधर्माणामत्र सत्त्वात् वर्णप्रणवपूर्वपक्षकथने तदधिकरणेन गतार्थता दुर्वारा । योग्यताया अत्यन्ताभावेऽपि अत्र वर्णप्रतीतिं को वा शाब्दिको भाषेत ।

'अक्षरं न क्षरं विद्यात् न क्षीयते न क्षरतीति वाऽक्षरम्'इत्येका व्युत्पत्तिः । 'अश्नुते इत्यक्षरं' इत्यपरा । प्रथमव्युत्पत्तौ ब्रह्म गम्यते । द्वितीयव्युत्पत्तौ च पदवाक्यादिवाक् । 'अर्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा', 'क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम् । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम्' इत्युभयत्र कैयटः ।

---

## ईक्षतिकर्मव्यपदेशाधिकरणम् ।

ब्रह्मण ईक्षतिकर्तृत्वमुक्तं शास्त्रारम्भे ईक्षत्यधिकरणे । अत्र तस्य ईक्षतिकर्मत्वमुच्यते । उभयमपि भवन्मतभञ्जकम् । ईक्षणस्य मुख्यत्वमुक्तं मोक्षत्यधिकरणे । अत्र ईक्षणस्य तत्त्वविषयत्वनियम उच्यते ।

'अन्यभावव्यावृत्तेश्च' इति, 'अदृष्टं द्रष्टृ' इत्यदृष्टत्वमुक्तम् । अयोगिभिरेवादृष्टत्वं तत्र विवक्षितं, योगिभिरीक्षणीयत्वमिष्यत एव इत्यत्रोच्यते ।

'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति

श्रावितं परमात्मस्वरूपस्य सूरिभिः सदा दृश्यत्वमीक्षतिकर्मत्वाभावे व्याहन्येत । अत्र श्लोके 'यत्तत्कवयो वेदयन्ते' इति तच्छ्रुतिः स्मार्यते ।

भवद्भाष्यादिग्रन्थेषु ईक्षतिकर्मव्यपदेशात् इत्येकपद्यमाश्रितम् । सूत्रकारशैलीविरुद्धा भवद्व्याख्या । 'ईक्षतिकर्म' इति पृथक्पदस्य पक्षसमर्पकत्ववर्णनं न्याय्यम् । 'परात्परं पुरिशयं पुरुषमीक्षते' इतीक्षणीयत्वेनोक्तः किं जीवसमष्टिरूपाण्डाधिपतिश्चतुर्मुखः उत सर्वेश्वरः पुरुषोत्तम इति विशयः । समष्टिक्षेत्रज्ञ इति पूर्वपक्षः । अन्तरिक्षात्परो ब्रह्मलोकश्चतुर्मुखलोकः स्यात् । तल्लोके ईक्ष्यमाणस्तदधिपतिश्चतुर्मुखः स्यात् । जीवघनो जीवव्यष्टिः । ततः परः समष्टिपुरुषः । एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथाकथंचिन्नेतव्याः । इत्थं पूर्वपक्षिते उच्यते, 'ईक्षतिकर्म सः । परमात्मा । कुतः । ईक्षतिकर्मविषयतयोदाहृते श्लोके 'यत्तच्छान्तमजरममृतमभयं परञ्च' इति शान्तत्वाजरत्वामृतत्वाभयत्वव्यपदेशात् । 'श्रुत्यन्तरेषु शान्तत्वादियुक्ततया ब्रह्मप्रसिद्धिर्द्योत्यते 'स' इति सौत्रपदेन । 'अधिकारादेव साध्यप्रतिज्ञासिद्धेस्तस्य प्रयोजनं हि वक्तव्यम् । शान्तमजरममरमभयमिति व्यपदेशस्य कथं परमात्मत्वसाधकत्वमित्यपेक्षायां श्रुत्यन्तरेषु परमात्मनः तादृशत्वेन प्रसिद्धिरिति वक्तव्यम् । अतस्तथात्वेन श्रुत्यन्तरप्रसिद्धिद्योतनं स इति पदस्य प्रयोजनम्' इति श्रुतप्रकाशिका ।

'एतस्माज्जीवघनात्परात्परं पुरिशय पुरुषं' इति च परमात्मनो व्यपदेश. । न चतुर्मुखस्य । तस्यापि जीवघनशब्दगृहीतत्वात्' इति श्रीभाष्यम् । स्ववाक्ये व्यपदेश एव भवद्भाष्ये व्यपदेशशब्दार्थत्वेन भाषित ।

अत्र सर्वपाप्मनिर्मोकानन्तरं प्राप्यतया निर्दिष्टो लोक शाश्वतं परमपद भवेत् । 'परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्न.' इत्यभिध्यातारमुपासकं परामृश्य 'यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः ससमाभिरुन्नीयते ब्रह्मलोकम्' इति तस्य सर्वपाप्मविनिर्मोकमुक्त्वा तदनन्तरं तस्य ब्रह्मलोकोन्नयनं श्राव्यते । विनिर्मुक्त इति सर्वकर्मक्षय उच्यते । तेन च तदनन्तरं कार्यब्रह्मलोकप्राप्तिवर्णन वार्यते ।

अत्र स इत्युक्त्या एतत्पादीयाधिकरणेषु स इति साध्यपूरणं ज्ञाप्यते ।

'लक्षीभूतोऽयमेकः खलु पुरुष इह ध्यायतेरीक्षतेश्च
क्षेत्रज्ञ· सोऽयमण्डाधिप इतरपरात्स्वान्यजीवात्परोऽसौ ।
नो चेद्भौमादियोगप्रकरणविहतिर्ब्रभवीतीतित्ययुक्तं
तस्मिञ्छान्तामृतत्वप्रभृतिपरगुणख्यात्यनुक्त्योरयोगात् ।'

'नन्वत्रोङ्कारमात्रालयफलगणनारूढभूम्यन्तरिक्ष-
प्रत्यासत्त्या निवासः सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।
पापोन्मुक्तेन लभ्यो ह्ययमिह कथितः सूर्यसम्पत्तिपूर्वं
सोढव्यो मर्त्यलोकैर्व्यवधिरिति समस्तत्समाधानमार्गः ॥

इति सारावलीश्लोकावेतदधिकरणार्थसंग्राहकौ । 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' इति निर्णीतार्था मुण्डकश्रुतिः सूच्यते लक्षीभूत इति । अत्र प्रणवस्यायतनत्वं श्रूयते । आयतन प्राप्तिसाधनम् । आयततेऽनेनेति । 'शरलक्षीभूतमन्यत्, तद्विद्धमन्यत्' इति वर्णनमिवात्यन्तासङ्गता भवेत् ध्यायतीक्षितिकर्मणोः भिन्नत्वशङ्केति व्यज्यते लक्षीभूतेति । सूत्रोक्तकर्मत्वं वेध्य-

त्वमिति व्यज्यते । 'प्रणवो धनुरित्यत्रोक्तप्रणवोपासनविवरणार्थं पञ्चमः प्रश्न ।' इत्यानन्दगिरि । उपनिषद्द्वयमप्याथर्वणिकम् । एकः पुरुषो लक्षीभूतः इति ध्यायतिवाक्ये श्रुत पुरुष ईक्षतिवाक्येऽपि श्रूयत इत्युभयोरैक्य सूच्यते 'अयमेक पुरुष.' इति । तत्क्रतुन्याय श्रुतिप्रसिद्धो द्वितीयपादारंभविचारितशाण्डिल्यविद्यायामेव व्युत्पादितः । तन्न्यायविरुद्धस्पष्टवचनेन खलु ध्येयप्राप्ययोर्भेदः शङ्कितुमर्हः । न केवलमत्र भेदवचनाभाव 'पर पुरुष' 'परं पुरुषं' इत्युभयत्रापि प्रत्यभिज्ञयैक्यं स्पष्टं श्राव्यते ।

जीवघनादिति श्रुतिपदस्य अधिपक्षेत्रज्ञव्यतिरिक्तसर्वजीवपरत्वमुच्यते पूर्वपक्षे । भवन्मतेऽपि हिरण्यगर्भ एव पूर्वपक्ष्यते । 'तत्रापरमिद ब्रह्मेति प्राप्त' इति भवद्भाष्यम् । 'परशब्दस्यापेक्षिकपरत्वविशिष्टे हिरण्यगर्भे वृत्तिरिति पूर्वपक्षयति' इत्यानन्दगिरिः । प्रकृतेः परो जीवसमुदायः । क्षेत्रज्ञश्चतुर्मुखोऽपि तदन्तर्गत इति सिद्धान्तार्थः । 'यदत्र ध्यानेक्षणयोः समानविषयत्वे स्थिते, जीव एव घनो व्यष्टिजीवः, ततः पिण्डात्परात्पर पुरुषं हिरण्यगर्भमीक्षत इति पूर्वपक्षे, जीवानां घनाज्जीवसमष्टिभूताद्धिरण्यगर्भात्परं पुरुषमित्येव श्रुत्यर्थः । तथा च ईक्षतिकर्म स परः कुत', तस्य यत्तच्छान्तमजरममृतमभयं पर चेति परत्वेन व्यपदेशादिति श्रीरामानुजीयं तदिदं विमृशन्तु विमर्शकाः । एवं सति भूमा संप्रसादादध्युपदेशात् 'अक्षरमंबरान्तधृतेः, दहरउत्तरेभ्यः' इत्यादाविव ईक्षतिकर्मव्यपदेशादित्येतावतैव कुतो न पर्याप्तं स इति किमधिकेन' इति भवदुक्तिः पूर्वोदाहृतश्रुतप्रकाशिकादर्शनाभावमूला । प्रथमपादे 'भेदव्यपदेशाच्चान्यः' इति सूत्रात्प्रत्यधिकरणं प्रतिज्ञायामन्यशब्दानुवृत्तिं, द्वितीयपादे 'अत एव च स ब्रह्म' इति सूत्रात्, स इत्यनुवृत्तिं, अस्मिन्पादे एतत्सूत्रात् स इत्यनुवृत्तिं, चतुर्थपाद 'प्राज्ञः' इत्यनुवृत्तिंच सूचयति सूत्रकृत् । 'स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते' इति भवद्भाष्ये उत्तरवाक्योक्तः परमात्मा

परामृश्यते । एतद्भाष्यवाक्येन 'स' इति सौत्रशब्दो व्याख्यात इत्यानन्दगिरिः । 'स' इति पदस्य श्रुत्यन्तरप्रत्यभिज्ञापकत्वमस्मन्मते ; भवन्मते एतच्छ्रुतावेवोत्तरवाक्यस्येत्येव भेदः । श्रुतिप्रत्यभिज्ञापरत्वमुभयत्र समानम् । परमात्मेत्येव साध्यविवक्षाऽस्ति प्रत्यधिकरणम् । अत्र 'स' इति पठनस्य साध्यसमर्पणाय तदनुवृत्तिसूचनमपि प्रयोजनम् । उदाहृतश्रुतप्रकाशिकानुसारेण सारावळीश्लोके परगुणख्यात्यनूक्त्योरिति सौत्रसशब्दार्थः सूच्यते । 'तस्मात् परो य. परमात्मेक्षणकर्मभूतः स एवाभिध्यानेऽपि कर्मभूत इति गम्यते' इति भवद्भाष्यम् । 'स ध्यातव्यः परमात्मैव कुतः । वाक्यशेषे ध्यातव्यस्य ईक्षातिकर्मव्यपदेशादित्यर्थ.' इति ब्रह्मामृतवर्षिणी । तथैवोक्तं ब्रह्मतत्त्वप्रकाशिकायाम् । स इति शब्दस्य ध्यातव्य इत्यर्थमुक्त्वा तस्य पक्षसमर्पकत्वमिष्यत इव ताभ्याम् । किमपरं ब्रह्म ध्यातव्यमुपदिश्यते उत परं ब्रह्म इति विशयशरीरप्रदर्शनं भाष्यादिषु भवद्ग्रन्थेषु । 'ध्यायतिकर्म' इत्येव प्रथमं पठनीयं यदि भवद्भाष्योक्तार्थ. सूत्रकृदभिमतः । 'ईक्षतिकर्म' इति सूत्रमुपक्रममाणस्तद्विषय एव ब्रह्मतदितरसंशय इति स्पष्टीकरोति ।

अस्मद्भाष्यप्रदर्शितं ईक्षातिकर्मशब्दस्य पृथक्पदत्वं न्याय्यमित्यङ्गीकृतं न्यायरक्षामणौ । तस्य पक्षसमर्पकत्वमप्यङ्गीकृतम् । 'ईक्षतिकर्म परं ब्रह्म । 'पुरुष ईक्षत' इतीक्षतिकर्मत्वव्यपदेशादित्यर्थ.' इति तत्रोक्तम् ।

ध्यायतीक्षतिकर्मणोरेकविषयत्वौत्सर्गिकत्वनियमादरणं सूचयति सूत्रकृत् पक्षद्वयेऽपि ।

'एव ईक्षतिकर्मणः परब्रह्मत्वे सिद्धे तदेवेक्षतिकर्म ध्यायतिकर्मेत्यत्र साध्ये ध्यायतिकर्मणोऽर्थात्परब्रह्मभावसिद्धिफलके पक्षो हेतुश्चेत्युभयं 'स' इत्यनेन प्रदर्श्यते । ईक्षणध्यानविषययोरेकत्वरूपहेतुप्रदर्शनार्थं तु 'अन्यभावव्यावृत्तेश्च' इति कृत्स्नं सूत्रमनुषञ्जनीयम् । ध्यायतीक्षतिकर्मणोर्भि-

न्त्वे ध्यानस्यादृष्टद्वाराऽऽश्रयणप्रसङ्गेन तयोर्भिन्नत्वव्यावृत्तेरित्यर्थः' इति च न्यायरक्षामणौ महान् क्लेशोऽनुभूयते भवद्भाष्योक्तार्थं सूत्रेषु योजयितुम् । का वा सूत्रानुगुण्यप्रत्याशा भवत्सिद्धान्तार्थस्य ।

" 'देवानां पूरयोध्या तत्र शेषे शेते परमः पुरुषः', इति तन्मते सति शयानत्वलिङ्गे कथं पूर्वपक्षस्य अवकाशः । तदप्यन्यथा नीतवतः कथ तदुक्तेन व्यपदेशेन समाधानमित्याशङ्किकमिति" इति विचित्रा भवदुक्तिः । देवानां पूरिति श्रुतौ न शयनप्रस्तावगन्धः । अतो न तच्छ्रुतिप्रत्यभिज्ञानम् । 'पुरिशयं' इत्युक्तं विषयवाक्ये ; पुरस्य श्रीवैकुण्ठत्वं नोक्तं तत्र । हृदयस्य ब्रह्मपुरत्वं अनन्तराधिकरणविषयवाक्ये वक्ष्यते । 'पूः प्राणिनः सर्वगुहाशयस्य' इत्यन्यत्र श्रूयते । अत्र पुरस्यायोध्यात्वं वा शयनस्य शेषत्वं वा न पक्षद्वयेऽपि भाष्यते श्रीभाष्ये । 'परात्परं पुरिशयं पुरुषमीक्षते' इति श्रुतेः सिद्धान्तार्थो भाष्यद्वयेऽपि समानः । 'स विद्वान् त्रिमात्रोङ्कारानिज्ञः एतस्माज्जीवघनात् हिरण्यगर्भात्परात्परं परमात्माख्यं पुरुषमीक्षते पुरिशयं सर्वशरीरानुप्रविष्टं पश्यति ध्यायमानः' इति भवदीयोपनिषद्भाष्यम् ।

'अथात्र कथं साध्यसाधनयोर्ध्यानेक्षणयोः समानविषयत्वनियममुल्लंघ्य ध्यायतिकर्मणि संशयो वा विपर्ययो वेति चेत्, अस्त्युत्सर्गतोऽयं नियमः । अथापि वचनबलादपरमुपासीनोऽपि तल्लोकं प्राप्य परं पश्यतीत्यभिमन्यतेऽयं पूर्वपक्षी । सिद्धान्ती तु नायं नियमः कदाऽपि भज्येत । अतः परमुपासीन एव वचनबलादपरब्रह्मलोकं प्राप्य ध्यातमेवात्र पश्यति' इति भवदुक्तिर्न सङ्गता । ध्यायतीक्षत्योः समानविषयत्वमौत्सर्गिकमिति भवताऽभ्युपगम्यते । श्रौततत्क्रतुन्यायोपोद्बलितस्य तन्नियमस्य नात्रापवादकं वचनं दृश्यते । अतो न तद्भेदपूर्वपक्षस्य सम्भवः । सौत्रहेतुर्न तन्नियमप्रदर्शकः । किं तु प्रत्यभिज्ञाप्रदर्शकः । अत्र को वा सिद्धा-